श्रीः

औपनिषदभगवन्नामगणनादिकमुपनिषदनुबन्धे करिष्यते ।

## श्रुत्यन्तरगताः ईशोपनिषदंशाः

( ईषत्तु भेदः क्वचित् )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ई. | ३ | बृ. | ६—४—११ | ई. | १६ | बृ. | ७—१५—१ |
| ,, | ९ | ,, | ६—४—१० | ,, | १७ | ,, | ,, ,, |
| ,, | १५ | ,, | ७—१५—१ | ,, | १८ | ,, | ,, ,, |

## ईशोपनिषदर्थसंग्रहः

अस्ति देवोऽखिलावासस्स सोऽज्योऽन्यस्य किं धनैः । तदर्थं कर्म कुर्वन्न लिप्येतेति द्विकोदितम् ॥
अथैतद्भिन्नरस्तत्त्व कृत्वा निन्दाऽऽत्मघातिनाम् । बहिरन्तःस्थितस्सर्वस्यात्माऽऽश्चर्योऽतिदुर्गमः ॥
ज्ञानशक्त्यादिमान् शुद्धमात्मानं परितः स्थितः । इति सर्वजगत्स्रष्टा वेद्यः प्रोक्तोऽष्टमान्ततः ॥
कर्मणा यस्तरेन्मृत्युं सोऽमृतं विद्ययाऽऽप्नुयात् । शमादिशालिनः पापविनाशे ब्रह्मसंगमः ॥
एवं तत्त्वहितादिर्ज्ञप्यन्ते मन्त्रचतुष्टयम् । कृपात यत्नाऽर्थ्यते ब्रह्मदृष्टिच्छादनवारणम् ॥
दिव्यकल्याणरूपस्य सोऽहमस्मीति पश्यता । दर्शनं पुरुषस्याथ चिदचिद्ब्रह्मवेदिनि ॥
स्वस्मिन्ननुग्रहाऽऽधानं नयनञ्च पथा सता । स्वधनब्रह्मणे, यत्र नमस्कारैस्सुखं स्थितिः ॥
इत्थं शुक्लयजुर्वेदसंहितान्त्यानुवाकतः । ईशेत्याद्यैस्तत्त्वहितपुमर्थास्साधु वेदिताः ॥ ८ ॥

## ईशोपनिषत्तद्व्याख्यानविशेषविषयमाला

प्रकाशिकायां विशेषाः



टिप्पणीविशेषास्तत्रतत्र स्वयमेव द्रष्टव्याः ।

॥ श्रीः ॥

। श्रीमते श्रीनिवासपरब्रह्मणे नमः ।

शुक्लयजुर्वेदसंहितान्तस्थिता

वाजसनेयसंहितोपनिषत्समाख्या

# ॥ ईशावास्योपनिषत् ॥

( काण्वपाठः )

[ शुक्लयजुर्वेदशान्तिपाठः—

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ओं शान्तिश्शान्तिश्शान्तिः ॥ ]

हरिः ओम् ।

ईशा वास्यमिदँ सर्वं यत्किंच जगत्यां जगत् ।

तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः ।

एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।

ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।

तद्धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

तदेजति * तद्\u200c नैजति तद्दूरे तद्वन्तिके ।

तदन्तरस्य सर्वस्य † तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।

सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥

---

* तन्नेजतीति शाङ्करपाठः । तन्नेजतीति माध्वपाठः मुद्रितश्रुतिकाशपाठश्च ।

† ' तदु सर्वस्य बाह्यतः ' इति माध्वपाठः ॥

यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥ ७ ॥

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः
समाभ्यः ॥ ८ ॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥ ९ ॥

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

विद्यां चाविद्यां च यस्तद्वेदोभयँ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

*अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ॥ १२ ॥

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

संभूतिं च विनाशं च यस्तद्वेदोभयँ सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ १४ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

†पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ॥

* शाङ्करपाठे असंभूत्येति छेदः ॥ † समूह तेजो यत्ते रूपमिति मुद्रितमुण्डकोपनिषत्कोशेषु, शाङ्करे च । अन्यत्र तु, समूह तेजः इत्येव । माध्यपाठे पश्यामीत्यन्तः षोडशमन्त्रः पूषन्नित्यारभ्य अनवानं पठ्यते । योऽसावित्यादिस्सप्तदशः । वायुरित्यादिरष्टादशः । ओमित्यादिरेकोनविंशः । अग्न इत्यादिर्विंशः ॥

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ओं क्रतो स्मर कृतं स्मर *क्रतो स्मर कृतं स्मर ॥ १७ ॥

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

हरिः ओम् ॥

इति शुक्लयजुर्वेदसंहितायामन्तिमश्चत्वारिंशोऽध्यायः ।

[ "ओं पूर्णमदः........." इति पूर्ववत् शान्तिपाठः ॥ ]

†ईशावास्योपनिषत् संपूर्णा ॥

* स्मर ओं क्रतो इति भाष्यपाठः ॥

†माध्यन्दिनपाठे ईशावास्योपनिषदि सप्तदशैव ( १७ ) मन्त्राः ।

३. मन्त्रे अभिगच्छन्तीति स्थाने '**अपिगच्छन्ती**' ति,

४. मन्त्रे अर्षदित्यत्र **अर्शदि**ति, ५. मन्त्रे तदु न इत्यत्र **तन्न** इति,

६. मन्त्रे आत्मन्येवेत्यत्र **आत्मन्नेवे**ति,

विजुगुप्सत इत्यत्र च **विचिकित्सति** इति च **पाठभेदाः** ।

९, १०, ११ मन्त्राणां स्थाने १२, १३, १४ मन्त्राः ।

१२, १३, १४ मन्त्राणां स्थाने च ९, १०, ११ मन्त्राः ।

तत्र 'अन्यदेवाहुर्विद्यया' इत्यत्र, '**अन्यदेवाहुर्विद्याया अन्यदाहुरविद्यायाः**' इति पञ्चमन्त्रपाठः ।

१५, १६ मन्त्रौ तत्रैव न स्तः । वायुरिति मन्त्रः पञ्चदशः । उत्तरार्धम् – ओं क्रतो स्मर **क्लिबे** स्मर कृतं स्मरेति । **क्लिबे** इति क्रमाय लोकायेति व्याकुर्वते ।

अग्ने नयेति षोडशः ।

सप्तदशस्तु मन्त्रः "१५, १६, मन्त्रांशघटनेन एवम्– "हिरण्मयेन पात्रेण सत्यस्यापिहितं **मुखम्** । योऽसावादित्ये पुरुषः सोऽसावहम् ओं खं ब्रह्म" इति ।

अन्यत् सर्वं यथाकाण्वम् ।

**श्रीरस्तु ॥**

# संकेतक्रमः

श्रीः । [ मद्रनगर-अडयार्-कोशालयस्थमेकं समग्रम् अन्यमसमग्रञ्च कोशमेव प्रायेणानुसृत्य श्रीदेशिकानुगृहीतं भाष्यं मुद्र्यते । प्रायः पाठान्तराण्यधः प्रदर्श्यन्ते; क्वचित्तु ग्रन्थमध्येऽपि निवेश्यन्ते । **कुत्राप्यक्षरपूरस्तु केवलमुत्प्रेक्षार्हो भवन् पाठो न कुत्रापि ग्रन्थमध्ये वास्तवपाठवन्निवेश्य मुद्र्यत इति तत्त्वमास्तिकैर्वेदितव्यम् ।**

अडयार्-कोशालयस्थमेकं तालपत्रम् - **क.** :

तत्रैवान्यत् - **ख.** :

श्री उ. वे. नवनीतं कृष्णमाचार्यैर्ग्रन्थाक्षरे मुद्रितम् - **ग.** :

श्रीपदश्रीवेङ्कटेश्वरप्राच्यकोशागारेण नागराक्षरे मुद्रितम् - **घ.** :

तत्र निर्दिष्टं तालपत्रं **घ.ता.** : इति ।

अन्ये तु मातृकाकोशास्तत्र तत्र स्पष्टमेव निर्देक्ष्यन्ते ; ]

[ श्रीमन्निगमान्तमहादेशिकचरणारविन्दप्रवणश्रीवत्साङ्कमिश्रापरनामधेयश्रीमन्नारायणमुनीन्द्रविरचिता, 'तद्भावो यथाभाष्यं प्रकाश्यते' इति आदौ १७ मन्त्रादौ च तदुक्तरीत्या उपनिषत्तद्भाष्यविवरणरूपा प्रकाशिका प्रकृतभाष्यान्वयोपयोगित्वादत्र निवेश्यते । श्रीपदपुरविराजमानसरस्वतीभवनाख्य-श्रीवेङ्कटेश्वरप्राच्य-कोशागारस्थं प्राचीनं हस्तलिखितं पुस्तकं प्रायेणानुसृत्य एतन्मुद्र्यते ।

**अत्र संकेतस्तु :**

**क.** इति पूर्वनिर्दिष्टलिखितपुस्तकस्य ;

**ख.** इति ग्रन्थाक्षरमुद्रितकोशस्य ।

अन्यत्तु संकेतनिरपेक्षं स्पष्टमेव कीर्त्यते । ]



॥ श्रीः ॥

॥ श्रीमते श्रीनिवासपरब्रह्मणे नमः ॥

# ॥ ईशावास्योपनिषत् ॥

ईशा वास्यमिदं सर्वं यत्किंच जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥ १ ॥

---

श्रीः

[ श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ ]

श्रीमन्निगमान्तमहादेशिकानुगृहीतम्

## ॥ ईशावास्योपनिषद्भाष्यम् ॥

येनाऽऽवास्यमिदं सर्वं चेतनाचेतनात्मकम् ।
विशुद्धसद्गुणौघं तं वासुदेवमुपास्महे ॥ १ ॥

सर्वेशानः सहजमहिमा सर्वभूतान्तरात्मा
सर्वान् दोषान् स्वयमतिपतन् सर्वविद्यैकवेद्यः ।
कर्माध्यक्षः कलुषशमनः कोऽपि मुक्तोपभोग्यः
सिद्धोपायः स्फुरति पुरुषो वाजिनां संहितान्ते ॥ २ ॥

श्रीः

## ॥ श्रीकूरनारायणमुनिविरचिता प्रकाशिका ॥

[illegible] धार्यं येन विचित्राश्च शक्तयो यस्य ।
श्रीरङ्गेशं तमीडे ननु ताकिञ्चनैरुपास्यमिह पुरुषम् ॥ १ ॥

---

श्रीः

। श्रीश्रीनिवासपरब्रह्मणे नमः ।

## ॥ उपनिषद्भाष्यपरिष्कारः ॥

टिप्पणी

वन्दे वेदान्ततत्त्वार्थसंरक्षणविचक्षणाम् ।
श्रीमद्राजमुखप्रायां श्रेष्ठां गुरुपरम्पराम् ॥ १ ॥

अञ्जनाचलशृङ्गारे पुंस्योपनिषदे परे ।
ब्रह्मणि श्रीनिवासेऽस्मिन् देवे भक्तिर्दृढास्तु मे ॥ २ ॥

---

पाठभेदः [1] तेन - ख ।

भा०

ईशावास्यमिदं सर्वमित्यादि यदनूद्यते ।
शिष्यं प्रति गुरोरेतद् ब्रह्मविद्यानुशासनम् ॥ ३ ॥

[1]संहितोदाहृतं सर्वं विनियोगपृथक्त्वतः ।
विद्यार्थं स्यादिति [2]व्यक्तुं निबन्धोऽस्य तदन्ततः ॥ ४ ॥

तत्र प्रथमन्तावत् [3]अचिदचिदाधिष्ठितस्य (अचिद्विकाराधिष्ठितस्य) स्वतन्त्रात्मभ्रमादिपरिजिहीर्षया सर्वस्य [4]परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तिमत्त्वमभिप्रेत्याऽऽह – ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगदिति । इदम् तत्तत्प्रमाणसिद्धमीश्वरव्यतिरिक्तं चिदचिदात्मकम् । ईशा "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यादिषु [5]जीवादत्यन्तविलक्षणतया प्रख्यातेन सर्वनियन्त्रा

प्र०

योऽशेषानन्यभूतान्तरात्मा दोषानस्पृष्टश्च विश्वैकबन्धुः ।
कर्माराध्यस्साध्यभक्त्येकलभ्यः श्रीमान् व्यक्तो वाजिनां संहितान्ते ॥ २ ॥
यस्याचार्यैः कृतं भाष्यं गम्भीरं विदुषां मुदे ।
बालाऽऽमोदाय तद्भावो यथाभाष्यं प्रकाश्यते ॥ ३ ॥
ईशावास्यानुवाकोऽयं वाजिनां संहितान्तगः ।
शिष्याय गुरुणा यस्मिन्ब्रह्मविद्योपदिश्यते ॥ ४ ॥
कर्मणां संहितोक्तानां विनियोगपृथक्त्वतः ।
विद्यागतोऽस्ति तद्व्यक्त्यै निबन्धोऽस्य तदन्ततः ॥ ५ ॥

**ईशावास्यमिदं सर्वम्** इत्ययमनुवाकोऽष्टादशमन्त्रात्मकः । एते च मन्त्राः पुरुषसूक्तादिवत्परमपुरुषतत्त्वस्वरूप-तदुपासनप्रपदन तत्प्राप्तिरूपतत्फलोपायपुरुषार्थानां संग्रहेण सम्यक्प्रतिपादकत्वात् , कर्मस्वकल्पत्वप्रकृता

टि०

उपनिषदो भाष्याणि च लब्ध्वाऽहं भूरिक्लेशसाहाय्यम् ।
आवेदयन् विशेषान् यथोपलम्भं परिष्कुर्याम् ॥ ३ ॥
श्रीरङ्गलक्ष्मणमुनीन्द्रगुरुप्रसादसम्प्राप्तनिगमान्तनिगूढतत्त्वः ।
श्रीवत्सचिह्नशिखरानुरुद्धनिभाष्यभाषितभाष्यवेशाद्धुतैः प्रथममत्र परिष्करोमि ॥ ४ ॥

अत्र ईशोपनिषदि अष्टादश मन्त्राः । तत्र प्रथमेन पुरुषार्थमार्गोपदेशः । द्वितीयेनात्र संहितान्तर्गतोपदेशो यदर्थः , तस्य फलस्य प्रदर्शनम् । तृतीयेन एतदनभिज्ञानामनिष्टवेदनम् । चतुर्थादयः अष्टमान्ताः मन्त्राः **ईशावास्यमिति** पदद्वयार्थोपपादकाः । तत्र चतुर्थेनैश्वर्यं व्याप्तिश्च वर्ण्यते । तत्रैश्वर्यप्रतिपादने

पा० अत्र [1], [2] संभूतोदाहृतमिति, व्यक्तुमिति च क्वचिन्मुद्रिते पाठोऽनन्वितः । एतद्विवरणम् , 'कर्मणां संहितोक्तानां तद्व्यक्त्यै' इति कूरनारायणीये ।

[3] अचिदचिदाधिष्ठितस्येति क. ख. । संभृतात्कोशपाठश्च । अन्यस्तु ग. प्रभृतिमुद्रितग्रन्थेषु । कूरनारायणभाष्यानुमतिः कतरत्रेति च दुर्निश्चयम् , 'देहेन्द्रियादिविशिष्टत्वात्' इति , 'प्रास्यतस्तत्त्वबुभुत्सया चोपसन्नस्य शिष्यस्य' इति च लेखनात् । अचिद्विकाराधिष्ठितस्येति पाठे अचिदनुजीवाद्यधिष्ठितपदेन ग्रहणं क्लेशोऽप्यस्ति ।

[4] प्रवृत्तिम् ग । प्रवृत्तित्वम् प्र—अनुसारि । [5] जीवात्यन्त - क. ख ।

**भा०** पुरुषोत्तमेन । वास्यं व्याप्यमित्यर्थः, सर्वाधारे स्वस्मिन् स्वेन [1]वासनीयं वा । स्मर्यते हि "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते" इति ॥ जगत्यामिति लोकान्तराणामुपलक्षणम् । जगत् स्वरूपतो धर्मतो वाऽन्यथात्वं गच्छत् भोग्यभोक्तृरूपं वस्तुजातम् । अतदात्मकं किञ्चिदपि नास्तीति द्रढयितुं यत्किंचेति विशेष्यते । "इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं [2]क्षेत्रज्ञमेव च" इति [3]ह्युपबृंहितम्

ननु '[4]रूढिर्योगमपहरति' इति न्यायादीशोऽत्र रुद्रः स्यात्; सर्वाद्युपपदाभावाच्च

**प्र०** [5]कात्यायनेनाविनियुक्तत्वाच्चोपनिषत्सारभूताः । भगवद्गीतादिभिश्च एतेषां मन्त्राणामुपबृंहणं तत्र तत्र परस्तात् प्रदर्शयिष्यते ॥

नन्वेवं ब्रह्मकाण्डे बृहदारण्यक एवैषां पाठस्स्यात्, न संहितायां, प्रयोजनाभावादिति चेन्न । एतेषु सारभूतानां [6]पञ्चषमन्त्राणां बृहदारण्यकेऽपि पाठदर्शनात् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन', 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति अविद्याख्यस्य कर्मविशेषस्य ब्रह्मविद्यायां विनियुक्तत्वेन संहितायामुदाहृतं कर्मजातं विद्याया अप्यङ्गमिति विशदीकरणार्थमेषां संहितान्तपाठोपपत्तेश्च । अतः कर्मसु [ स्व ? ] विनियुक्तत्वात्, पूर्वोक्ततत्त्वोपायप्रयोजनप्रतिपादनपरत्वाच्च उपनिषद एवैते मन्त्रा इति सिद्धम् ॥

तत्र तावदाचार्यः प्रथमं रजस्तमःप्रचुरदेहेन्द्रियादिविशिष्टत्वात्, "ईश्वरोहमहं भोगी" इत्यादिश्रीभगवद्गीतोक्तप्रक्रियया स्वतन्त्रोऽहम्, देवतान्तरपरतन्त्रोऽहमिति च भ्राम्यतस्तत्त्वबुभुत्सया चोपसन्नस्य शिष्यस्य स्वतन्त्रात्मभ्रमादिनिवृत्त्यर्थं निर्दोषस्यात्मकस्य कृत्स्नस्य प्रपञ्चस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वमुपदिशति—

**ईशावास्यं**......... । **इदम्** अचिन्त्यविविधविचित्ररचनतया[7] ब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रितनया[8] च प्रत्यक्षादिप्रमाणसिद्धमित्यर्थः । **सर्वम्** ईश्वरव्यतिरिक्तं भोग्यभोक्तृरूपं सर्वम् । **ईशेति** तृतीयैकवचनान्तम् । सर्वनियन्त्रेत्यर्थः । सङ्कोचे मानाभावात् । महापुरुषेणेति यावत्, "योऽसावसौ पुरुषः" इति अनुवदिष्यमाणत्वात् । स एव हि सर्वस्येशः । तथा च श्रुत्यन्तरम् – "पतिं विश्वस्यात्मेश्वरम्" इति । तेन **वास्यं** [9]निवसनीयम् । व्याप्यमिति भावः । अनन्याधारत्वात परस्य ब्रह्मणः । यद्वा सर्वाधारे स्वस्मिन्नेव **स्वेन** वसनीयं सर्वं ( सर्वं वासनीयं ? ) प्रतिष्ठापनीयमित्यर्थः । स्मर्यते हि 'सर्वत्रासौ समस्तं च वसत्यत्रेति

**टि०** एतदर्थम् । पञ्चमेन वास्यमिति प्रकृत्यर्थो व्याप्तिस्सर्वविषयिणी । षष्ठेन तदुभयसिद्धशरीरात्मभावः । सप्तमेन तन्निबन्धनत्वं सामानाधिकरण्यस्य ज्ञाप्यते । अष्टमेन वास्यमिति प्रत्ययावगतार्हत्वसूचितमखिलहेयप्रत्यनीकत्वादिकमिति विवेकः । अथ नवमादित्रयेण कर्माङ्गिकयैव विद्यया निःश्रेयसावाप्तिरुच्यते । द्वादशादित्रयेण फलस्वरूपविवेचनम्; विद्यायाश्शमदमाद्यङ्गकत्वबोधनं वा । अथ चत्वारो ब्रह्मविद्यानिष्ठानुसंधेयाः मन्त्राः ।

**पा०** 1 अयं क, ख. पाठः । क्वचिदेव तु वसनीयमिति । दूषणार्थप्रवृत्तश्रीरङ्गाचार्यव्याख्यानेऽपि वासनीयमित्येवानूदितम् ।

2 क्षेत्रज्ञमित्येव भाष्यकोशेषु पाठः । अन्यत्र क्षेत्रज्ञ एव चेति पाठोऽपि दृष्टः ।

3 इत्युपबृंहितम् - ग, घ. ।

4 योगं हरतीति - ख ।

5 कात्यायनेन विनियुक्तत्वादिति मुद्रितपा. । एतत्संहितान्तर्गतमन्त्रान्तराणां विनियोगं कर्मसु कृतवता कात्यायनेनैषां तथा विनियोगाकरणात् स्वतन्त्रोपनिषदियमिति प्रकृते वक्तव्यम् । यथा शाङ्करे ।

6 पञ्चषण्मन्त्राणां - ख ।

7 रचनया - ख ।

8 मिश्रतया - ख ।

9 निवासनीयम् - ख ।

**भा०** मैवम् । कारणविषयाकाशप्राणादिशब्दवत् रूढेरिह बाधितत्वात्, 'एको ह वै नारायण आसीत् न ब्रह्मा नेशानः', 'अनपहतपाप्माहमस्मि [1]नामानि मे धेहि' इत्यादिभिः असर्वकारणत्वेन कर्मवश्यत्वेन च संप्रतिपन्ने रुद्रे सर्वावास्यत्व-सर्वाधारत्वादेरसंभवात् तद्वत्तया प्रसिद्धेऽनवच्छिन्नैश्वर्ये सर्वेश्वरे यौगिकोऽयं शब्दः प्रत्येतव्यः । यद्यपि प्रसिद्धवन्निर्देशाभावादाकाशादिवाक्यवैषम्यम्; तथाऽप्यैन्द्रीन्यायात् विरुद्धार्थविषयतयैव रूढिभङ्गोपपत्तिः । न चात्र "सर्वत्वमाधिकारिकम्" इति न्यायः; सङ्कोचाद्दृष्टेः । प्रवाहेश्वरानेकेश्वरपक्षौ तु [2]त्रैकालिकसर्वनिर्वाहकैकेश्वरप्रतिष्ठापकैः [3]प्रमाणगणैः प्रत्यूढौ । अतः 'पतिं विश्वस्यात्मेश्वरम्' इत्यादिप्रसिद्धानन्याधीनैश्वर्यम्, 'योऽसावसौ पुरुष' इत्यनुवदिष्यमाणम्, ब्रह्मेशानजनकतयाऽनन्यथासिद्धवाक्यनिर्योगितम्, 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिषु सर्वान्तर्यामित्वेन

**प्र०** वे यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते" इति । **जगत्यां** मह्याम्[4] । इदं लोकान्तराणामप्युप-लक्षणम् । **जगत्** अन्यथात्वं गच्छत् । तत्राचिदंशस्य भोग्यत्वाय स्वरूपविकाररूपमन्यथात्वं, चिदंशस्य[5] तु भोक्तृत्वाय ज्ञानसङ्कोचविकासादिलक्षणस्वभावविकाररूपान्यथात्वमिति भेदोऽनुसंधेयः । ईशनाव्याप्तं किञ्चिदपि नास्तीति [6]द्रढयितु **यत्किञ्चे**ति जगद्विशेष्यते । जगत्यादिषु लोकेषु यत्किञ्च भोक्तृभोग्यरूपं जगद्वर्तते तदिदं सर्वं **ईशा** वासुदेवेन [7]व्याप्यं धार्यमित्यर्थः । "इन्द्रियाणि मनो बुद्धिस्सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमे(ए)व च" इत्याद्युपबृंहणसहत्वमिहानुसन्धेयम् । "पृथगात्मानं प्रेरितारञ्च मत्वा, ज्ञाज्ञौ द्वावजावीशनीशौ" – छान्दसो ह्रस्वः । ईशानीशावित्यर्थः – "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादिषु प्रसिद्धो जीवेश्वरयोरीशीशितव्यादिलक्षणोऽत्यन्तभेदोऽप्यत्र सिद्धः ॥

ननु "रूढिर्योगमपहरति" इति न्यायादीशोऽत्र रुद्रस्स्यात् । मैवम् "एको ह वै नारायण आसीत्; न ब्रह्मा [8]नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमेत" इत्यादिषु "अपहतपाप्मा वा अहमस्मि, नामानि मे धेहि" इत्यादिषु च भगवत्कार्यत्वेन कर्मवश्यत्वेन च सम्प्रतिपन्ने रुद्रे सर्वव्यापित्व सर्वाधारत्वादेरत्यन्तासम्भवेन विरुद्धार्थविषयतयैवेह रूढेर्भग्नत्वात् । एवञ्च जगत्कारणत्वादिवाक्यगताकाशप्राणादिशब्दन्यायेन "अजस्रमैश्वर्यसिद्ध" इत्यनवच्छिन्नैश्वर्यतया प्रसिद्धे सर्वेश्वरे यौगिक एवायम् ईट् (ईश) शब्दः प्रत्येतव्य इति सिद्धम् ॥

**टि०** तत्र प्रथमेन ब्रह्मानुभवप्रतिबन्धकापनयनप्रार्थनम् । द्वितीये अनुभवप्रकारः । तृतीये चिदचिद्विलक्षणतयानुसंहिते परमात्मनि अनुग्रहप्रार्थना । चतुर्थे सर्वपापनिवृत्तिपूर्वकसर्वविधकैङ्कर्यरूपमोक्षप्रापणप्रार्थनमित्यस्मत्सिद्धान्त-सर्वसारसंग्रहरूपेयमुपनिषत् सप्रयोजनसर्वाक्षरा । अयञ्च कश्चिदिहाऽऽपाततोऽर्थसंग्रहः – आदौ मन्त्रद्वयेन ज्ञानवैराग्यानुष्ठानान्युपदिष्टानि । अथ ज्ञानरहितानां तृतीये निन्दापूर्वकं चतुर्थप्रभृतिना ज्ञानोपदेशः । एवं विद्योपदेशात् कर्मण्यश्रद्धा माभूदिति तद्रहितानां भूयस्तमःप्रवेशप्रदर्शनेनोभयसमुच्चयवचनं नवमादित्रयेण ।

**पा०** [1] नाम - ख । आकरग्रन्थे विशेषो द्रष्टव्यः ।
[2] एकेति पदमधिकं - क, ख ।
[3] प्रमाणैः - ख ।
[4] उच्यते म् - ख ।
[5] 'तु' नास्ति - ख ।
[6] दर्शयितुं - ख ।
[7] वास्यं व्याप्यं - ख ।
[8] महोपनिषदि संप्रति दृश्यमानपाठस्तु किञ्चिदन्यथेति दर्शयिष्यते । ख कोशे तु नाप इति न सोम इति च न; सूर्य इत्यनन्तरं 'न चन्द्रमा' इति ।

भा० प्रख्यातम्, तत एव 'स ब्रह्मा स शिव' [1]इत्यादिभिः विभूतिभूतानां ब्रह्मशिवेन्द्रादीनां 'विश्वमेवेदं पुरुषः' इत्यत्र विश्वस्यैव विशेषणतयोक्तं नारायणमेव सर्वस्यावास[2] (वासक) मीशं [3]वक्तुमुचितमेतद्वाक्यमित्यलमन्यत्कदिप्रम द्रवगहिताममस्तपदाध्ययनानभिज्ञाश्रोत्रियचोद्योपालम्भेन ॥

एवं मुमुक्षोरीश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति — **तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्** इति ॥ **तेन** - जगता भोग्यताभ्रमविषयेण, **त्यक्तेन**-

---

प्र० एवं मुमुक्षोरीश्वरपारतन्त्र्यप्रबोधमुत्पाद्य वैराग्यभूषितां वृत्तिमुपदिशति — **तेन त्यक्तेन भुञ्जीथाः** । **तेन**- जगता । भोग्यताभ्रमविषयेणेति भावः । **त्यक्तेन**- [4]अल्पत्वास्थिरत्वदुःखमूलत्वदुःखमिश्रत्वदुःखोदर्कत्वदेहात्माभिमानमूलत्वस्वाभाविक[5]ब्रह्मानन्दानुभवविरुद्धत्वरूपा ये विषयदोषाः सन्ति, तन्निरूपणपूर्वकं परित्यक्तेन उपलक्षितस्सन, **भुञ्जीथाः** भगवदुपासनोपयुक्तदेहस्य धारणमात्रोपयिकमन्नपानादिकं यागदानहोमादिनाऽनुपयोगिपरिजनपरिच्छदादिकञ्च भोग्यवर्गं भुञ्जीथा इत्यर्थः । यद्वा — दोषमसकृन्निरूपणेन(णात) त्यक्तेन भोग्याभासेनोपलक्षितस्सन **भुञ्जीथाः**- सर्वावासत्वेन [6]प्रकृतमुक्तदोषप्रतिभटं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथा इति योज्यम् । [7]तत्र "भोक्ता भोग्यं प्रेरितारञ्च मत्वा", "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥" [8]इत्यादिभिः प्रपञ्चितस्तत्त्वत्रयविवेकोऽप्यत्र भाव्यः । अनीशया—भोगसाधनभूतया प्रकृत्येत्यर्थः । जुष्टं—प्रीयमाणं स्वस्मादन्यमीशम । अस्येशस्य [9]महिमानम् इति — प्राप्नोतीत्यर्थः । छान्दसो गुणाभावः । तदिति प्रतिनिर्देशोऽध्याहार्यः । यदा अन्यमीशमस्य महिमानञ्च पश्यति तदा वीतशोको भवति [10]इत्यन्वयो वा । **मा गृधः कस्य स्विद्धनम्** — कस्यस्वित् - कस्यापि बन्धोरबन्धोर्वा, **धनं मा गृधः** — मा भिकाङ्क्षीः[11] । "गृधु अभिकाङ्क्षायाम्" इति

टि० अथ फलवद्वृत्त्यगापि समुचितस्यैव मुमुक्षुभिरपेक्ष्यत्वस्थापने द्वादशादिमन्त्रेण । अथ वयामन्त्रा इति । **विनियोगपृथक्त्वात्** इति । एकस्य तूभयत्वे संयोगपृथक्त्वमिति पू. मी. न्यायः ४. ३. ५. १. ॥

१. मं टि० अयमादिमो मन्त्र इत्थं **श्रीभागवते** अनूदितः : "आत्मावास्यमिदं विश्वं यत् किञ्चित् जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् (८. १. १०.) इति । **आह** इति । अत्राचार्यः कर्तेति कूरनारायणाचार्यप्रभृतिम् । उक्तश्चात्रापि, '**शिष्यं प्रति गुरोरेतत्**' इति । **ईशोऽत्र** इति ।

पा० [1] इत्यादिविभूति - **ग** ; 'इत्यादिषु' इति क्वचिन्मुद्रणे तु प्रागस्मत्कृतमुद्रणमनुसृत्य । तत 'इत्यादिभिः' इति पाठस्य **क**, **ख**-साक्षादुपलम्भाभावादन्वेष्यम् ।

[2] अयं **क** - पाठः । सर्वस्यावासकम् - **ख** ; सर्वस्य वास्यम् - **ग**, **घ** ।

[3] वक्तुमुचितमेव तद्वाक्यम् - **ख** ।

[4] अल्पास्थिरत्व - **ख** । [5]ब्रह्मानुभव - **ख** ।

[6] प्रकृतमित्यतः प्राक् 'प्रकरणे प्राप्तमिति अधिकम् - **ख** ।

[7] अत्र च - **ख** ।

[8] इत्यादिभिरित्यादि अस्येशस्येत्यन्तं मुद्रिते न ।

[9] महिमानमेत्येत्यर्थः । तदेति प्रतिनिर्देश इति - **क** ।

[10] इत्यन्वयो वेति स्थाने इत्यर्थ इति - **क** ।

[11] आन्ध्रपुस्तकशुद्धिपत्रे 'अभिकाङ्क्षीः' इति शोधितम् । अन्यत्र 'अभिकाङ्क्षः' इत्यस्ति ।

भा० दोषभूयस्त्वदर्शनात् परित्यक्तेन उपलक्षितस्सन्, भुञ्जीथाः अप्रतिषिद्धयोगधर्मोपयुक्त-देहधारणमात्रौपयिक[1]भोक्तव्यवर्गमित्यर्थप्रकरणाभ्यां सिध्यति । यद्वा [2]सर्वावासत्वेन प्रकृतं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुञ्जीथा इति योज्यम् ॥

(कस्यस्वित् ?) कस्यापि बन्धोरबन्धोर्वा धनं मा गृधः माऽभिकाङ्क्षः (क्षीः ?)[3] । आह च यमः किङ्करं प्रति "परमसुहृदि" इत्यारभ्य "शठमतिरुपयाति योऽर्थतृष्णाम्–पुरुषपशुर्न स वासुदेवभक्तः" इति । इदं च [4]धनाशाप्रहाणं परमात्मेतरकृत्स्नविषय-वैराग्योपलक्षणम् । स्मर्यते हि– "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" इति ॥ १ ॥

प्र० धातुः । आह च यमः किंकरं प्रति "[5]हरति परधनं निहन्ति जन्तून् वदति तथाऽनृतनिष्ठुराणि यश्च", "न सहति परसंपदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः," "परमसुहृदि बान्धवे कलत्रे सुततनया-पितृमातृभृत्यवर्गे । शठमतिरुपयाति योऽर्थतृष्णाम्", "पुरुषपशुर्न स वासुदेवभक्तः" इति । भगवद्गीतासु च "न कांक्षे विजयं कृष्ण" इत्यादि । इदञ्च धनाशाप्रहाणं परमात्मव्यतिरिक्तकृत्स्नविषयवैराग्योपलक्षणम् । स्मरन्ति हि "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" इति ॥ १ ॥

---

टि० ईशेनाऽऽवास्यमीशावास्यमिति ईशपदघटितं समस्तमिदं पदमिति पूर्वपक्ष्याशयः । 'रूढिः' इत्यादि । अयं रथकाराधिकरणन्यायः (पू. मी. ६. १. १२.) । एवमीशपदघटनपक्षेऽपि रूढिबाधाच्च दोष इति समाधाना-भिप्रायेणैव श्रुतप्रकाशिकायामपि विवृतम्, "ईशेनाऽऽवास्यम् (३. ४. १४.) इति । मुख्यव्याख्यानमपि तत्रैव "ईशशब्दस्तृतीयान्तः । ईशा तेन वास्यम्' इति । **निरतिशयभोग्यम्** इति । त्यज्यतां बाह्य भोग्याभासभूतं, यदिदं दृश्यते; भुज्यतां तत्रैव सवत्रान्तःस्थं निरतिशयभोग्यमिति कृत्स्नमन्त्रतात्पर्यम् । **स्विम्** इत्यस्य प्रश्नवितर्कान्यतरार्थकत्वेन, मा गृधः; कुतः ? कस्यस्विद्धनम् ? न हि धनमस्मदीयमित्यर्थोक्तौ वाक्यभेदात् कस्यापीत्यर्थः स्वीकृतः । **परमात्मनि** इति । 'सर्वेषणाविनिर्मुक्तःस भैक्षं भोक्तुमर्हति' इत्युत्तरार्धम् ॥ १ ॥

---

पा० [1] कं भोग्यवर्गम - **ग, घ** ।
[2] सर्वावास्यत्वेन **ग, घ** : चतुर्थमन्त्रारम्भे च सर्वावासत्वेन प्रस्तुतमिति वक्ष्यति ।
[3] कूरनारायणीये दर्शनात् अनुशासनानु-शोधादिना च अभिकांक्षीरित्येव पाठ्यम्; अभिकांक्ष इति लेखकप्रमाद इति वदन्ति ।
[4] धनाशा - **ग, घ** ।

टि० [5] हरतीत्यस्योत्तरार्धम् – "अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनन्तः ॥" नेत्यादेरुत्तरार्धम् – "न यजति न ददाति यश्च सन्तं मनसि न तस्य जनार्दनोऽधमस्य ॥" अर्थतृष्णामित्येतदनन्तरं चतुर्थपादः – "तमधमचेष्टमवेहि नास्य भक्तम् ॥" पुरुषपशुरित्यादेः पूर्वा त्रिपादी – "अशुभमतिरसत्प्रवृत्तिसक्तस्सततमनार्यकुशील (विशाल) संगमत्तः । अनुदिनकृतपापबन्धसक्तः" इति, श्रीविष्णुपु. ३. ७. २८ – ३१. दृश्यमानपाठानुसारं । अन्यथा 'तु' अविभागानुगुणपाठोऽन्वेष्टव्यः ॥

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।**

**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥**

**भा०** एवं विदुषः फलसङ्गकर्तृत्वादित्यागयुक्तं नित्यनैमित्तिकरूपं विद्याङ्गभूतं कर्म यावज्जीवमनुष्ठेयमित्याह — **कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** इति ॥

ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवनमिष्टं भवतीति ज्ञापनाय सन्प्रयोगः । **शतम्** इति च प्रायिक ([1]प्रायशत) विषयम् । शतं समा जीवन् अधिकारानुगुणानि कर्माणि कुर्वीतैव, न कदाचिदपि विद्याङ्गं कर्म परित्यजेदित्यर्थः ॥

अस्य वाक्यस्य फलसाधनभूतस्वतन्त्रकर्मविषयत्वे विशेषहेत्वभावः सूचितः, "नाविशेषात्" इति । अर्थान्तरं च प्रकरणाविरुद्धमनन्तरसूत्रोक्तम् "स्तुतयेऽनुमतिर्वा" इति । भाष्यम्, "वाशब्दोऽवधारणार्थः । ईशावास्यमिदं सर्वमिति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैतदेव दर्शयति – "एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते [2]नरे" इति" इति ॥

**प्र०** एवं विरक्तस्य विदुषः फलसंगकर्तृत्वादित्यागयुक्तो (त्वादिवियुक्तो) ब्रह्मविद्यांगभूतः कर्मयोगो यावज्जीवमनुष्ठेय इत्याह – **कुर्वन्** ... ......**नरे** ।

**शतं समाः** - शतं संवत्सरान् । प्रायिकवादोऽयम् । **कर्माणि** - नित्यनैमित्तिकानि, **कुर्वन्नेव**, **इह** लोके **जिजीविषेत्** - जीवितुमिच्छेत् । ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवितुमिच्छा भवतीति प्राप्तत्वात् शतसंख्याकान् वत्सराञ्जीवन्नित्यनूद्य कर्माणि कुर्वीतैवेति विधिस्सङ्कामयितव्यः । यावज्ज्ञानयोगाधिकारं[3] कर्मयोगः कर्तव्य इति भावः । कर्मयोगो नाम "दैवमेवापरे यज्ञम्" इत्यादिना [4]विकल्प्य विहितेषु कर्मयोगावान्तरभेदेष्वेकं यथारुचि अंगितया स्वीकृत्य अन्यानि नित्यनैमित्तिकानि तदंगतयोपसंहृत्य [5]असंगकर्मानुष्ठानविशेषः । न कदाचिदपि विद्यांगं कर्म परित्यजेदिति एवकाराभिप्रायः । **त्वयि** - ईश्वरपरतन्त्रात्म[6]स्वरूपज्ञानतया तदाज्ञापरिपालनरूपकर्मानुष्ठाने अधिकारपूर्तिमतीति भावः । **एवम्** - एवमेव अनुष्ठेयानि (अनुष्ठानम्) इत्यर्थः । उक्तमर्थं व्यतिरेकेण [7]दृढीकरोति - **नान्यथेतोऽस्ति इति** । **इतः** –

**टि०** कर्मणां फलसाधनत्वात् सर्वफलवैराग्यस्य चोपदिष्टत्वात् कर्माणि त्याज्यानीति मतिमपाकर्तुमनन्तरमन्त्र इत्याह **एवम्** इति । कर्तृत्वादीत्यादिपदेन क्रियादिषु करणत्वेतिकर्तव्यतात्वादिग्रहोऽप्यस्तु । गीतं हि, 'ब्रह्मार्पणं ब्रह्म हविः' इत्यादि । **अर्थान्तरम्** इति । अस्मिन् विद्यास्तुतिरूपार्थान्तरपक्षे

**पा०** [1] **ख** ।

[2] नरे" इति - **ग, घ** ।

[3] यद्यपि शतं समा इति मूले श्रीभाष्यमाचार्यभाष्यञ्चानुसृत्य भक्तियोगसमानकालिककर्मणामपि ग्रहणं युक्तम्, अथापि उपरि तदुक्तेरेतावदत्र विवक्षितमित्याशयः ।

[4] विकल्पविहितेषु - **ख** ।

[5] सङ्गकर्मानुष्ठानविशेषतया - **क** ।

[6] स्वरूपतयेति - **ख** । स्वरूपज्ञानतयेति पाठे कर्मणो ज्ञानरूपत्वमभिसंहितं भवेत् । न चेत् ज्ञानवत्तयेत्यर्थो भाव्यः ।

[7] स्थिरीकरोति ।

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताँस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः ॥ ३ ॥

भा० त्वयि-[1]ब्रह्मविद्याधिकारिणि एवमेवानुष्ठेयार्थः । इतोऽन्यथा नास्ति इति व्यतिरेकेणोक्तं [2]दृढीकारार्थम् । ननु ब्रह्मविदोपि [3]कर्मानुष्ठानं स्वभावाद्बन्धकं स्यादित्यत्राह न कर्म लिप्यते नर इति । [4]प्रस्तुतब्रह्मविदि नरे " अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् " इति विनियोग-पृथक्त्वन्यायेन कर्म न स्वर्गादि [5]फललेपहेतुर्भवति । विद्यानुपयुक्तकाम्यानां निषिद्धानां च विरक्तेन विवेकिना न बुद्धिपूर्वोपादानसंभवः । [6]संभवतामपि केषांचित् " नाविरतो दुश्चरितात् " इत्यादिबलात् स्वानुगुणा निष्कृतिः स्यात् । तदधिगमाधिकरणे तु प्रामादिकानामेव अश्लेषः परविद्यावतामपि स्थापितः । ज्ञानाग्निदग्धाधिकारो विधिनिषेधानधिकारीति पक्षस्तु न वेदवित्संमतः ॥ २ ॥

वक्ष्यमाणविद्यायां [7]शीघ्रप्रवृत्त्यर्थम्, उक्तप्रकारब्रह्मवेदनविधुरतया [8]वित्तैषणादियोगाच्च

प्र० अनुष्ठानात् **अन्यथा** - प्रकारान्तरम् [9]अननुष्ठानं नास्तीत्यर्थः । ननु ब्रह्मविदोऽपि कर्मानुष्ठानावश्यम्भावे बन्धस्स्यादित्यत्राह - **न कर्म लिप्यते नर** इति । विद्यातिरिक्तेषु कर्मफलेषु न रमत इति **नरः** । प्रस्तुतब्रह्मविदि नरे विद्याङ्गतया क्रियमाणं कर्मयोगः, **न लिप्यते** - न स्वर्गादिहेतुर्भवति । अपि तु ज्ञानयोगद्वारा वा साक्षाद्वा प्रथमं परिशुद्धजीवात्मविषयकयोगमुत्पाद्य पश्चाद्भक्तियोगाङ्गभूतं परमात्मसाक्षात्कारमेव उत्पादयति इति भावः ॥

यत्तु " कुर्वन्नेवेह कर्माणि " इत्ययं विधिः अविद्वद्विषय एव, न [10]तु ब्रह्मविद्विषयः, तस्य विधि-निषेधशास्त्रवश्यत्वाभावात् । तस्य [11]ब्रह्मज्ञाने कर्माधिकारः प्रनष्टः " इति शांकरं व्याख्यानम् - तत् प्रकरण-विरुद्धम्, " विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते " इत्युपरितन-विध्यन्तरविरुद्धत्वेन न वेदविदो बहुमन्यते ( न्यन्ते ) ॥ २ ॥

एवं मन्त्रद्वयेन तत्त्वत्रयस्वरूपं विद्याङ्गकर्मानुष्ठानस्वरूपञ्च यथावदुपदिष्टम् । इदानीं ये केचनासुरप्रकृतयः

टि० उत्तरार्धस्य श्रुतप्रकाशिकादर्शितेत्थं योजना, " नरे त्वयि न कर्म लिप्यत इतीतोऽन्यथा नास्ति । इदमेव ( वं ? ) तत्त्वम् ; न स्तुतिमात्रमित्यर्थः " इति । अत्र विशेषोऽस्मदीये आचार्यभाष्यतात्पर्ये ( २६ - ४२ ) द्रष्टव्यः ॥ २ ॥

३. मं टि० " अनन्दा नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति

पा० [1] ब्रह्मविदित्यधिकारिणि - क, ख ; ब्रह्मविद्याधिकारिणि - घ. ना ।
[2] उक्तदृढीकारः - क, ख ।
[3] कर्मानुष्ठानमभावाद्बन्धः स्यात् - ग, घ ; कर्मानुष्ठानं स्वभावाद्बाधकं स्यात् - क ।
[4] प्रस्तुते - घ ।
[5] फलहेतुः - ग, घ ।
[6] संभावितानाम - ग, घ ।
[7] शीघ्रं प्रवृ - ग. घ.
[8] वित्तैषणायोगा - ग. घ.
[9] अयं गो. ग्रन्थाक्षरपाठः । अन्यत्र ' तु ' ' अनुष्ठानं ' इति ।
[10] ' तु ' नास्ति - ख.
[11] ब्रह्मज्ञानात्मिना अधिकारः ख.

**भा०** अन्यथाभवद्भिर्ज्ञानानुष्ठानैरात्मघातिनां [1]निरयनिपातोऽवश्यम्भावीत्याह --- **असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।** इति ।

**असुर्याः**-"असुरस्य स्वम्" ( पा० ४. १. १२३. ) इति [2]यत् । आसुरप्रकृतीनाम् अनुभाव्या इत्यर्थः । **नाम** इति प्रसिद्धौ । **ते**-नरकसंज्ञिता भीषणतमा लोकाः सन्ति । पुनस्तान् विशिनष्टि **अन्धेन तमसाऽऽवृताः**- गाढेनान्धकारेण व्याप्ताः । **तान्**-आलोकप्रसङ्गरहितान्, **ते**-स्वात्मघातिनः, **प्रेत्य**- तदातनदेहादुत्क्रम्य, **अभिगच्छन्ति**- कार्त्स्न्येन निरन्तरं प्राप्नुवन्ति । **ये के च**- देवजातीया मनुष्यजातीया वा, तथा [3]ब्राह्मणाः क्षत्रियादयो वा । **आत्महनः**-"असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्या ( [4]त्यादिनाऽऽ) स्वात्मानमसत्कल्पतां स्वात्मानं नयन्तः । देहघा( [5]पा )तमुखेन पातकवर्गोपलक्षणमि ( [6]न्त्वि ) दम । **जनाः**- जनिमन्तः संसरन्त इत्यर्थः ॥ ३ ॥

---

**प्र०** ये योगिनो नरास्तत्त्वमविदित्वा अन्यथा जानन्ति, कामक्रोधलोभाद्यन्विताः सन्तः [7]स्वत शास्त्रविधिमुत्सृज्य यज्ञादिकर्म कुर्वन्ति, निषिद्धानि चाऽऽचरन्ति, ते सर्वे स्वात्मघातिनः; तेषां निरयपातोऽवश्यंभावीत्युपदिशति आचार्यः --- **असुर्याः – जनाः** । असुराणां स्वभूता **असुर्याः** । [8]असुरस्वभूता इव आसुरप्रकृतीनामेव अनुभाव्याः । अन्येषां देवप्रकृतीनामनुभवितुमशक्या इत्यर्थः । अतिभीषणा इति यावत् । **नाम** इति प्रसिद्धौ अतिभीषणा नरकसंज्ञिताः [9]ते लोकास्सन्तीति सर्वशास्त्रप्रसिद्धमिति भाव. । पुनस्तान् विशिनष्टि - **अन्धेन तमसाऽऽवृता** इति । **अन्धेन** - अतिगाढेन, **तमसा** - अन्धकारेण, **आवृताः** - व्याप्ताः । **तान्** - अतिभीषणान् आलोकप्रसंगरहितांश्च लोकानिति भावः । [10]**ये के च** - देवजातीया मनुष्यजातीया वा । तत्राऽपि ब्राह्मणा वा क्षत्रियादयो वा ( ब्राह्मणक्षत्रियादयो वा ) । **आत्महनः** - "असन्नेव स भवति असद्ब्रह्मेति वेद चेत" इत्यात्मनामसत्कल्पतां स्वात्मानं नयन्तः । [11]ब्रह्मज्ञानविहीनाः काम्यकर्मादिनिष्ठा इत्यर्थः । तथा च बृहदारण्यके – "अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधो जना इति" इति । देहपातमुखेन पातकवर्गस्य चोपलक्षणमिदम् । पातकिनश्च ये । **जनाः** - जनिमन्तः । संसरन्त इत्यर्थः । स्वात्मघातिनस्ते सर्वे **प्रेत्य** - तदातनदेहादुत्क्रम्य, **अभिगच्छन्ति** - अभितो गच्छन्ति । सर्वानपि पृथिव्यन्तरिक्षस्वर्गेरवादिसंज्ञितान्[12] नारकलोकान्निरन्तरं गच्छन्ति इति भाव ( इत्यर्थः ) ॥ ३ ॥

---

**टि०** **अविद्वांसोऽबुधो जनाः**" इति बृ. उ. ६. ४. । **उक्त** इत्यादि । आद्यमन्त्रोक्तयोर्ज्ञानवैराग्ययोर्विरहादित्यर्थः । **देहेति** । जन नामात्महननं नाम तेषामसत्त्वापादनम् । तच्चात्मस्वरूपाज्ञानात् दुर्मरणादितश्चेत्याशयः ।

---

**पा०** [1] निरयपातः - **ग, घ** ।
[2] यत्प्रत्यय - **क** । वत् - **ग** ।
[3] ब्राह्मणक्षत्रियादयो वा - **ग, घ** ।
[4] **क** । [5] घात - **ख**; पात - **ग** ।
[6] **ख** । [7] 'स्वत' इति नास्ति - **ख.**
[8] असुरस्वभावभूता वा - **ख** ।
[9] संज्ञिता इत्यशुद्धम - **ख** ।
[11] ब्रह्मज्ञानहीनाः - **ख** ।
[12] पूर्व सर्वानित्येव पठित्वा अत्र संज्ञितानपीति पठति - **ख** ।

**टि०** [10] उत्तरार्धे प्रथमश्रुतं **तान्** इति पदं पूर्वं व्याख्याय **ते** इति पदं व्याख्यातुं तदपेक्षिततया **ये के च** इत्यादिकं पूर्वं व्याख्याति ।

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

भा० सर्वावासत्वेन प्रस्तुतमीश्वरतत्त्वं विरुद्धवदभिलापव्यञ्जितेन विचित्रशक्तियोगेन विशदयति – **अनेजदेकं मनसो जवीयः** इति । **अनेजत्**- अकम्पमानम् । **एकम्**- प्रधानभूतम्, [1]स्वाधीनस्वसमानद्वितीयरहितं वा ; [2]( स्वानधीनस्वसमानद्वितीयरहितम् वा ) ; ( [3]स्वाधीनं समानद्वितीयरहितं वा ) ; [4]( अस्वाधीनस्वसमानद्वितीयरहितम् ) । **मनसो जवीयः** – [5]वेगवत्तरान्मनसोऽप्यतिशयितजवम् ॥

नन्विदं न जाघटीति निष्कम्पत्वं वेगवत्तरत्वं चेति । मैवम् । तात्पर्यवृत्त्या सुघटितत्वात् । सर्वस्य स्वेन नियम्यमानत्वात् अनेजत् । सर्वेत्र मनसो गोचरदेशमतिक्रम्य वृत्तेः मनसो[6]जवीय इत्युपचर्यते । एवमुत्तरेष्वपि वाक्येषु भाव्यम् ॥

**नैनद्देवा आप्नुवन् पूर्वमर्षत्** । [7]एनत् - प्रकृतमेकतत्त्वम् । **पूर्वमर्षत्** - प्रागेव सर्वान् प्राप्नुवत्, **देवाः** - [8]हिरण्यगर्भादयोपि, **नाप्नुवन्** - एतावन्तं कालं न लेभिरे ।

प्र० एवं तृतीयेन मन्त्रेण विद्याया शीघ्रप्रवृत्तिसिद्ध्यर्थमविदुषामनर्थ उक्तः । अथ आचार्यस्सर्वावासत्वेन प्रस्तुतस्य परस्य ब्रह्मणोऽनन्तविचित्रशक्तियोगं विरुद्धवदभिलापेन व्यञ्जयन्नुपदिशति – **अनेजदेकं...दधाति** ।

**अनेजत्** "एजृ कम्पने" ; अकम्पमानम् , **एकम्** - [9]प्रधानतमम् , स्वाधीनं ; स्वसमानद्वितीयरहितमिति वा । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः । परमसाम्यमापन्ना अपि मुक्ताः ब्रह्माधीना एवेति भावः । **मनसो जवीयः** - वेगवतो मनसोऽपि[10] **जवीयः** - वेगवत्तरम् । प्रकृत्यतिक्रान्तमपि देशं क्षणमात्रात् मनः सङ्कल्पेन गच्छति चेत् , [11]ततः पूर्वमेव तत्र गच्छतीति भावः । निष्कम्पं वेगवत्तरं चेति विरोधप्रतीतिः । परिहारस्तु - विभुत्वाद्वस्तुतो [12]नेजति ; तत एव मनसोऽपि अगोचरदेशे सर्वदैव वृत्तेः मनसो जवीय इत्युपचर्यत इति । किञ्च **देवाः** - ब्रह्मरुद्रादयोऽपि , **पूर्वमर्षत्** - प्रागेव सर्वान् देवान् प्राप्नुवदित्यर्थः । **एनत्** - प्रस्तुतं [13]सर्वावासं परं ब्रह्म , **नाप्नुवन्** - एतावन्तं कालं न लेभिरे इति भावः । पूर्वमेव प्राप्तम् न लेभिरे इति [14]विरोधप्रतिभानम् । विभुतया प्राप्तमपि

टि० पातेनिवत् पातेत्यनेकनालकोशस्थम् । एतदर्थस्तु अस्मदीय आचार्यभाष्यतात्पर्ये द्रष्टव्यः ॥ ३ ॥

४. मं० टि० एकपदस्य मुख्यरूपमर्थमुक्त्वा स्वसजातीयरहितरूपमर्थान्तरमाह स्वेत्यादिना । अत्र

पा० [1] ग । [2] पूर्वमस्मन्मुद्रितपुस्तके ।
[3] क । [4] ख ।
[5] वेगवत्तरमनसो - ग, घ ।
[6] जवीय उपचर्यते - ग, घ ।
[7] एनदित्यादि अर्षदित्यन्तं मुद्रिते ग, घ इत्यादौ न दृश्यते । पूर्वमर्षदिति पदाभ्याससत्त्वात् प्रथमं प्रमादकृतोऽस्य त्याग इत्यूह्यते ।
[8] अपिशब्दं विना - ग, घ ।
[9] प्रधानतमं शास्त्रविदुषां स्वाधीनस्वसमानाधिकद्वितीयरहितमिति चेति ख शोधितपा० । आनन्दाश्रममुद्रणे तु 'प्रधानतमं, प्रधानं शास्त्रविदुषामिति स्मृतेः ; स्वाधिकसमानद्वितीयरहितमिति वा' इति ।
[10] मनसो जवीयः - क ।
[11] तत्पूर्वं - क । [12] अनेजत् - ख ।
[13] सर्वावास्यं - ख ।
[14] विरोधभानम् - ख । इति चेति चकारोऽधिकः - क ।

भा० विभुत्वेन नित्यप्राप्तमपि कर्मप्रतिबद्धज्ञानाः क्षेत्रज्ञा विद्याधिगमात् पूर्वं [1]स्वया बुद्ध्या न प्रप्नुवन्तीति न विरोधः । यथोक्तं छान्दोग्ये – "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन हि प्रत्यूढाः" इति ॥ तद्धावतोऽन्यानत्येति तिष्ठत्-"यः पृथिव्यां तिष्ठन्" "य आत्मनि तिष्ठन्" इत्यादिक्रमेण तत् सर्वत्र तिष्ठदेव धावतो गरुडादीनप्यत्येति । यावद्यावद्धावन्ति जविनः, [2]तावतस्तावतः परस्तादपि वर्तत इत्यर्थः । यथोच्यते — "वर्षायुतशतेनापि पक्षिराडिव संपतन् । नैवान्तं कारणस्येयात् यद्यपि स्यान्मनोजवः" इति । अन्येषां कचित्तिष्ठतां धावदतिक्रमणं नास्तीति वैचित्री ॥ अन्यदपि किञ्चिदाश्चर्यमित्याह - तस्मिन्नपो मातरिश्वा दधाति इति । तस्मिन्नवस्थितः [3]पतनप्रतिबन्धानुगुणकाठिन्यादि-रहितोऽपि वायुरपो बिभर्ति । सर्वाधारभूतेन सर्वेश्वरेण [4]विधृतस्सन् मातरिश्वा तच्छक्त्यैव पाथःपयोधरनक्षत्रग्रहतारकादिकं बिभर्तीत्युक्तं भवति । स्मर्यते हि - "द्यौः सचन्द्रार्कनक्षत्र[5] खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मनः" इति ॥ ४ ॥

---

प्र० कर्मसंकुचितज्ञाना क्षेत्रज्ञा आचार्योपदेशाद्विना स्वबुद्ध्या [6]नाप्नुवन्तीति परिहारः ॥ यथोक्तं छान्दोग्ये — "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति, अनृतेन हि प्रत्यूढाः" इति ॥

अपि च तद्धावतोऽन्यानत्येति तिष्ठत् – "यः पृथिव्यां तिष्ठन् - य आत्मनि तिष्ठन् - यस्सर्वेषु भूतेषु तिष्ठन्" इत्यादिक्रमेण सर्वत्र तिष्ठदेव तत् ब्रह्म धावतोऽन्यान् गरुडादीन(प्य)त्येति । तिष्ठतः पुरुषस्य धावदतिक्रमणं न घटत इति विरोधप्रतिभानम् । जविनो यावद्यावत धावन्ति तावतस्तावतः परस्तादपि वर्तत इति तात्पर्यादविरोधः ॥ यथोच्यते "वर्षायुतशतैर्वा(?)ऽपि पक्षिराडिव संपतन् । नैवान्तं कारणस्येयात् यद्यपि स्यान्मनोजव" इति । अन्यदपि किंचिदाश्चर्यमित्याह — तस्मिन्नपो मातरिश्वा दधाति । तस्मिन् - वायुरेव अवस्थितो मातरिश्वा । अप इत्युपलक्षणम् । पाथःपयोधरग्रहनक्षत्रतारकादिकं बिभर्तीत्यर्थः ॥ धारणानुगुणकाठिन्यरहितोऽपि वायुः पाथःप्रभृतिकं बिभर्तीत्यद्भुतम् । सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुः [7]तच्छक्त्यैव बिभर्तीत्यभिप्रायः । "एष सेतुर्विधरण एषां लोकानामसंभेदाय", "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः", "द्यौस्सचन्द्रार्कनक्षत्रं (त्रा) खं दिशो भूर्महोदधिः । वासुदेवस्य वीर्येण विधृतानि महात्मन" इत्यादिषु प्रसिद्धमेतत् ॥ ४ ॥

---

टि० अस्वाधीनेति पाठे न क्लेशः । स्वाधीनेति पाठमपि अपरतन्त्रेत्यर्थविवक्षया निर्वहन्ति । तदा प्रथमस्वपदं द्वितीयस्वपदवत् परमात्मपरं न; किन्तु जीवादिपरम् । अनन्याधीनेति फलितार्थः । अत्र कृत्स्नाप्यानुसारात्, 'स्वाधीनमस्वाधीनस्वसमानद्वितीयरहितमिति पाठोऽप्युत्प्रेक्ष्येत । अथाप्युपरिदर्शितेष्वन्यतम एवोपलब्धत्वाद् ग्राह्यः ॥ ४ ॥

पा० [1] स्वबुद्ध्या - ग, घ ।
[2] तावत इति पदं सकृदेव पठति - ग, घ ।
[3] पतनप्रतिबन्ध - क । तपनप्रतिबन्धेत्यन्यत्र (ख) अक्षरव्यत्यासो लेखकप्रमादात् । अप्रतिबन्धेति ग । तत्रौचित्यादप्रतिबन्धेति प्रागस्मत्कृत उल्लेख एव अन्यैरप्यनुसृतः ।
[4] विधृतः स मातरिश्वा - ग, घ ।
[5] नक्षत्रा खमिति सहस्रनामकोशे क्वचित्पाठः ।
[6] नाप्नुवन् - ख ।
[7] तच्छक्त्यैवम् - ख ।

तदेजति तद्‌ु नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

भा० "अनेजदेकं मनसो जवीय" इत्युक्तमर्थमादरात् ([1]रार्थे) मुखान्तरेणानुशास्ति – तदेजति तदु नैजति इति ।

तत् – व्याप्तं तत्त्वं पूर्वोक्तप्रकारेण जवीयस्त्वादिना, एजति – कम्पते; कम्पत इवेत्यर्थः । तदु नैजति - तदेव वस्तुवृत्त्या न कम्पते । तद्दूरे तद्वन्तिके [2]तद्दूरे वर्तते । तदेव अन्तिके अदूरे समीपे वर्तते । [3]यद्वा मूढप्रतिबुद्धपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्ति ([4]वृत्ति) त्व-व्यपदेशः । यथाऽऽह शौनकः, – "पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् । तेषां तत् परमं ब्रह्म दूराद्दूरतरे स्थितम् ॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः । विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके" इति ॥

केचित् पदार्थाः कस्यचिदन्तर्भवन्ति, न बहिः । केचित् बहिर्भवन्ति, नान्तः । तदुभयव्याप्तिमाह - तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः इति । तत् - [5]सर्वव्याप्तं

प्र० अथेदानीमाचार्यः स्वोपदिष्टं विचित्रशक्तित्वमेवादरार्थं मुखान्तरेण पुनरनुशास्ति — तदेजति ... बाह्यतः ॥ भूयो भूयः प्रवचनं श्रवणं च कर्तव्यमिति च पुनरनुशासनस्याभिप्रायः । तथा च शास्त्रम् — "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति । तत्त्वतः – अज्ञानसंशयविपर्ययनिरासो यथा भवति, तथा । प्रोवाच - प्रकर्षेण ब्रूयात्; पुनः पुनरुपदिशेदित्यर्थः ॥ अत एव "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया" [6]इत्यादिना, भगवता [7]उपदिष्टस्याप्यर्थस्य वैशद्याय तत्त्वदर्शिसकाशात् प्रणिपातादिपुरस्सरं [8]पुनः पुनः श्रवणं विहितम् । उपदिष्टा च पुनरनुगीता इत्याहुराचार्याः ॥

तदेजति ; तत् - सर्वव्याप्तं परं ब्रह्म, [9]एजति - कम्पत इव ; [10]जवीय इवेति यावत् । तदु - तदेव, नैजति-वस्तुतस्तु न कम्पते । तद्दूरे च तदेव अन्तिके च वर्तते । आसुरदैवप्रकृतिकपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः । आह च भगवान् शौनकः - [11]"पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् । तेषां तत् परमं ब्रह्म दूराद्दूरतरे स्थितम् ॥ तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः । विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके" इति । इदमप्येकं वैचित्र्यमित्याह –तत् - सर्वव्याप्तं परं ब्रह्म, अस्य सर्वस्य -

५. मं० टि० तदुनैजति । तदेजति श्रुतिपाठवत्, उत्तरश्रुतः उकारोऽपेक्षितत्वादाकृष्ट इति ज्ञेयम् । पराङ्मुखेति । विषयासक्त्यसमाश्रयेण मोक्षाभाव., मननपराणां विषयत्यागिनामविलम्बश्च

पा० [1] आदरार्थे - ख ।
[2] तद्दूरेऽन्तिके च वर्तते मूढत्येवं - ग, घ ।
[3] क कोशेऽपि यद्वेति न ।
[4] वृत्तित्वस्य - क; वृत्तित्व - ख ।
[5] सर्वव्याप्तं ब्रह्म - क, ख ।
[6] इत्यादि - ख ।
[7] उपदिष्टस्यार्थस्य - क ।
[8] 'पुनः' इति सकृदेव पठ्यते - क ।
[9] एजतीव - ख ।
[10] जवीय एव - ख ।
[11] पराङ्मुखा ये गोविन्दे विषयासक्तचेतसः इत्यानन्दाश्रमपा० ।

यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥

भा० उक्तं परं ब्रह्म, अस्य-विचित्रचिदचिद्रूपेण प्रमाणसिद्धस्य सर्वस्य वस्तुनः, अन्तः भवति, अप्रतिघातादविभक्तदेशं वर्तत इत्यर्थः । तत एव सर्वस्यास्य बहिरपि भवति; परिमितानां पदार्थानां भावदेशे इव अभावदेशेऽपि वर्तत इति यावत् । तदेतद्व्यक्तमुक्तं तैत्तिरीये सर्वपरविद्योपास्यविशेषनिर्धारणार्थे 'सहस्रशीर्षम्' इत्यनुवाके, "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति ॥ ५ ॥

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ तद्विदः सांप्रतिकं प्रयोजनमाह —

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ इति

[1]ब्रह्मविन्माहात्म्यविशेषद्योतनाय तुशब्दः । **सर्वाणि भूतानि** – ब्रह्मादिस्थावरान्तानि । अत्रात्मशब्दः [2]सङ्कोचकाभावात् प्रकरणात् अर्थस्वभावाच्च सर्वान्तरात्मविषयः । पृथिव्यादिभिः ध्रियमाणमपि तन्मुखेन [3]परमात्मन्येव स्थितमिति एवकाराभिप्रायः । **अनुपश्यति** - अनुस्यूतं विशदं निध्यायति । **सर्वभूतेषु चात्मानम्** इति व्याप्तिमात्रपरम् । तस्य

प्र० विविधविचित्ररूपतया प्रमाणप्रसिद्धस्य सर्वस्य वस्तुनः अन्तः भवति । तदैव पुनः तदानीमेव **सर्वस्य** बहिरपि भवतीत्यर्थः । अन्येषां तु गृहान्तर्वर्तिपुरुषाणां तदानीमेव न बहिःस्थत्वं संभवति । बहिर्वसताश्च नान्तर्वर्तित्वमितीह [4]वैचित्र्यम् ।

यद्यप्यणुषु नान्तर्वर्तिता संभवति, तथाप्यप्रतिघातादविभक्तदेशतया वर्तित्वमात्रेणाणुष्वन्तर्वर्तित्वोक्तिः । एव बहिर्व्याप्तिरपि अविभुद्रव्यापेक्षयैव, न तु विभुद्रव्यापेक्षयाऽपीति द्रष्टव्यम् । तदिदं वैचित्र्यं तैत्तिरीयकेऽपि उक्तम् "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति ॥ ५ ॥

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् । अथ सर्वं जगत् ब्रह्मात्मकमित्यनुसंदधानस्य[5] ऐहिकं प्रयोजनमाह — **यस्तु सर्वाणि... विजुगुप्सते** ॥

**यः** - तत्त्वज्ञानी । अधिकारिणः [6]माहात्म्यविशेषज्ञापनाय **तु**शब्दः । **सर्वाणि भूतानि** - ब्रह्मादिस्थावरान्तानि, **आत्मन्येव** - परमात्मन्येव अनुस्यूतं **पश्यति** - [7]विशदं निध्यायतीत्यर्थः । पृथिव्यादिभिः ध्रियमाणमपि तन्मुखेन परमात्मन्येव स्थितमिति एवकाराभिप्रायः ॥ किञ्च **सर्वभूतेषु च**

टि० क्रमेण श्लोकयोरर्थ इति श्रीमद्रहस्यत्रयसारे (प्र. र.)। ननु तैत्तिरीयेऽपि चिदचित्सर्वविषयत्वं कथं व्यक्तमिति शङ्कां परिहर्तुमाह **सर्वपरविद्योपास्यप्रकरण** इति ॥ ५ ॥

पा० [1] माहात्म्यविशेष - ख. घ. ता. । अन्यत्र, 'माहात्म्ये विशेष' ।
[2] संकोचाभावात् - ख. ।
[3] परमात्मन्यवस्थित - ग. घ. ।
[4] वैचित्र्यमिति भावः - ख. ।
[5] अनुसंधानस्य प्रयोजनम् - ख. ।
[6] माहात्म्यज्ञापनाय - ख. ।
[7] निदिध्यासनीत्यर्थः - ग. ।

यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥ ७ ॥

भा० तैर्धार्यत्वाभावात् । 'सः' इति प्रतिनिर्देशोऽध्याहार्यः । ततो न विजुगुप्सते —ब्रह्मात्मकत्वेनानुदृष्टेषु सर्वेषु स्वात्मविभूतिन्यायात् कुतश्चिदपि न विजुगुप्सते, कञ्चिदपि निन्दां न करोतीत्यर्थः ॥ ६ ॥

पुनरपि सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येन [1]द्रढयन् तथाऽनुदर्शनस्य सद्यः [2]शोकमोहनिवर्तकत्वमाह —

यस्मिन सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कश्शोक एकत्वमनुपश्यतः ॥ इति

**यस्मिन** — प्रणिधानसमये । **विजानतः** - स्वतन्त्रपरतन्त्रवस्तुभेदं [3]सम्यक् उपदिष्टेन मार्गेण शास्त्रेण ( सद्गुरूपदिष्टेन शास्त्रेण ) विविच्य जानतः । **आत्मैव सर्वाणि भूतान्यभूत्** - परमात्मैव सर्वविशिष्टः प्रतीत इत्यर्थः । देवोऽहमित्यादिवत् लोकवेदमर्यादया

---

**प्र० आत्मानं** - परमात्मानं यः पश्यति । इदं व्याप्तिमात्रपरम् । परमपुरुषस्यानन्याधारत्वादिति भावः । यच्छब्दस्य स इति प्रतिनिर्देशोऽध्याहार्यः । सः उक्ततत्त्वज्ञानी, **ततः** - तेषु । सप्तम्यर्थे तसिः । ब्रह्मात्मकतया दृष्टेषु सर्वेषु भूतेष्वित्यर्थः । **न विजुगुप्सते** - कुतश्चिदपि न बीभत्सते । स्वात्मविभूतिन्यायात् कञ्चिदपि निन्दां न करोतीति भावः ॥ ६ ॥

एवं वैयधिकरण्येनोक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येनापि द्रढयन् तथाऽनुध्यानस्य [4]सद्यश्शोकमोहनिवर्तकत्वमाह — **यस्मिन् सर्वाणि...अनुपश्यतः** ॥

**यस्मिन्** - प्रणिधानसमये, **विजानतः** - "ईशावास्यम" इत्यारभ्य "ततो न विजुगुप्सते" इत्येवमन्तेनोपदिष्टं स्वतन्त्रपरतन्त्रवस्तुभेदं यथोपदेशं विविच्य जानत इत्यर्थः । नन्वेवं भत्यन्तभेदाभ्युपगमे सर्वाणि भूतान्यात्मैवाभूदिति सामानाधिकरण्यं [5]भज्येतेत्याशङ्कानिरासाय "यस्य पृथिवी शरीरम्", "यस्यात्मा शरीरम्" इत्यादिघटकश्रुतिसिद्धं संबन्धविशेषमाह — **एकत्वमनुपश्यत** इति । आकृतिव्यक्त्योरिव गुणगुणिनोरिव चात्यन्तभिन्नयोरपि जगद्ब्रह्मणोः **एकत्वं** विभागानर्हसंबन्धविशेषं **पश्यतः** विशद(तम)मनुध्यायत इत्यर्थः । "रामसुग्रीवयोरैक्यं देव्येवं समजायत" इत्यादिष्विव इहाप्येकशब्दस्य संबन्धविशेष एवार्थो विवक्षितुं युक्त इति भावः । एवञ्च सत्याह — **सर्वाणि भूतान्यात्मैवाभूत्** इति । परमात्मैव सर्वभूतशरीरकः प्रतीतोऽभूदित्यर्थः । **तत्र** - तदा, प्रणिधानसमये **को मोहः** - स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न संभवति । **कः शोकः** - परमात्मविभूतितया अवगते सर्वस्मिन्निर्ममत्वाभिसन्धया पुत्रमरणराज्य-

---

६. सं. टि० **सप्तम्यर्थं** इति । जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति पञ्चमीविधायकवार्तिकं स्मर्तव्यम् ।

---

पा० [1] द्रढयति - घ. ना. ।
[2] शोकनिवर्तकत्व - ग. घ. ।
[3] सम्यगित्यादिस्थाने सद्गुरु इत्यादि - क. ख. ।
[4] शोकनिवर्तक - क. ।
[5] आशङ्क्य तन्निवारणाय - ख ।

भा० शरीरात्मभावेन जगद्ब्रह्मसामानाधिकरण्ये संभवति बाधोपचारस्वरूपैक्यादिपक्षा बहिष्कार्याः । तत्र – तदा, को मोहः – स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न संभवतीत्यर्थः । कः शोकः – परविभूतिभूते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादावपि न कश्चिच्छोकः स्यादित्यर्थः । [1]यथाह – "अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे (किञ्चित् प्र) [2]किञ्चन दह्यते" इति ॥ एकत्वमनुपश्यतः – सर्वविशिष्टैक्यमनुपश्यतः ॥

न ह्ययमेकशब्द एकव्यतिरिक्ताभावपरः । 'ईशावास्यमिदं सर्वम्' इतीश्वरव्याप्तत्वेन प्रक्रान्तस्य कस्यचित् केनचिदपि बाधाभावात् । सर्वभेदमिथ्यात्ववेदनावेदनयोः कथंचिदपि तादृशोपदेशादिप्र( [3]शप्र )वृत्त्ययोगाच्च । न चासौ परस्परविरुद्धानां स्वरूपैक्यप्रतिपादकः, सर्वव्याघातोन्मादने स्वपरमतविवेकादिविप्लवप्रसङ्गात् । विशिष्टैकत्व( [4]विशेष्यैक्य ) विवक्षा तु सर्वप्रमाणानुगुण्यात् भाव्यते । ततोऽपि वरमत्र प्रकृतसामानाधिकरण्य[5]निर्वाहानुगुणसंबन्धविशेषविवक्षा[6] । प्रयुज्यते हि [7]संबन्धविशेषविवक्षया[8] च "रामसुग्रीवयोरैक्यम्" इत्यादिष्वेकशब्दः ॥

एतौ च श्लोकौ यद्यपि मुक्तविषयतया नेतुं शक्यौ, तथाऽपि पूर्वानुगुण्यान्मुमुक्षुप्रशंसार्थत्वमुचितम् । ततश्च वैराग्यातिशयविवक्षया शास्त्रजन्यज्ञाने[9] तन्मूलोपासनात्मक-

प्र० [10]हरणादावपि न कश्चिच्छोकस्स्यादित्यर्थः । यथाह — "अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे [11]किञ्चन दह्यते" इति ॥

७. सं. टि. बाधोपचारेत्यादि । न भूतानि सन्ति, आत्मैवास्तीति बाधपक्षः । अनात्मसु भूतेष्वात्मत्वारोप उपचारपक्षः । आत्मशब्दप्रवृत्तिनिमित्तभूतान्तर्यामित्व-, भूतशब्दप्रवृत्तिनिमित्तभूतप्राणित्वरूपविशेषणत्यागेन निर्विशेषविशेष्यैक्यवादः स्वरूपैक्यपक्षः । आदिपदेन 'पुरोहितोऽयं राजा' इतिवत् सामर्थ्यमुखेन जीवब्रह्मैक्योक्तिनिर्वाहपक्षो गृह्यते । यद्यपि श्रुतप्रकाशिकायां (जिज्ञा-) तत्त्वमसिविचारोपक्रमे, "बाधकवाक्येषु सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम् । तत्त्वमस्यादिषु जीवब्रह्मणोः सामानाधिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम् । अचिद्ब्रह्मणोस्तु – "सर्वं खल्विदं ब्रह्म" इत्यादौ अतात्त्विकरूपारोपेण सामानाधिकरण्यम्, "ज्योतींषि विष्णुः" इत्यादौ बाधार्थमिति चतुर्धा हि परैः सामानाधिकरण्यं तत्र तत्राभ्युपेतम्" इति स्थलभेदेन सामानाधिकरण्यनिर्वाहप्रकारभेदः कथितः - अथापि भगवता भाष्यकृता तत्त्वमसिवाक्य एव नानापक्षोद्भावनपूर्वं दूषणभाषणात् एकस्मिन्नेव वाक्येऽनेकपक्षविकल्पनं नायुक्तम् । वस्तुतो देवोऽहमित्यादिप्रकृतसूक्तिस्सर्ववाक्यविषयीकारेणाऽपि भवितुमर्हति । उपचारादिपक्षविवरणं कूरनारायणभाष्यानुसारेण वा ग्राह्यम् ॥ ७ ॥

पा० [1] यथाहुः - ख. ।
[2] किञ्चन - ख. ; मोक्षधर्मे (२२३) किञ्चनेत्येव पाठः ; यस्येति स्थाने भाव्यमिति च ।
[3] ख. । [4] ख. ।
[5] निवेशानुगुण - ख. ।
[6] संबन्धविवक्षा - ग. घ.
[7] विभागानर्हसंबन्धविशेष - ख. ।
[8] विवक्षया राम- ग. घ. ।
[9] ज्ञानेन - ग. ।
[10] हरणादेरपि - ख. ।
[11] किञ्चित् प्रदह्यते - ख. ।

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूस्स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥**

भा० ज्ञाने[1] चानुदर्शनवाचोयुक्तिः । समाधिविशेषफलभूतस्त्वद्यतनस्साक्षात्कार[2] उपायत्वेन अभिहितत्वान्नात्र [3]प्रशंसनीयः । मोक्षोपायोपदेशपरेषु सर्वेषु वाक्येषु दर्शनशब्दः उपासनविषय इति शारीरकभाष्ये प्रत्यपादि ॥ ७ ॥

पुनरप्येनमीशेशितव्यतत्त्ववेदिनं वेदितव्यविशेषशोधनेन च विशिनष्टि —

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः इति ।**

**सः** - सर्वभूतान्त (सर्वान्त[4]) रात्मभूतब्रह्मदर्शी . **पर्यगात्**[5] - पर्यगच्छत् . प्राप्नुयात् इत्यर्थः : "ब्रह्मविदाप्नोति परम्" इति न्यायात् । समाधिलब्धेनानुभवेन प्राप्तवानिति सिद्धानुवादो वा , "अत्र ब्रह्म समश्नुते" इतिवत् । **शुक्रम्** - अवदातं [6]स्वप्रकाशरूपम् ,

प्र० अत्र केचित् – सर्वाणि भूतानि आत्मैवाभूदिति [7]बाधार्थं सामानाधिकरण्यम । तथा च आत्मैव सर्वाणि भूतानि = आत्मव्यतिरिक्तानि सर्वाणि न सन्तीत्यर्थः । यथा 'चोरः स्थाणुः' इति । स्थाणुरेवायं न चोर इति हि तस्यार्थः , तथेहापीत्याहुः । अन्ये तु नरपतिरेव सर्वे लोका इतिवदौपचारिकमिदं सामानाधिकरण्यम । नरपत्यधीनास्सर्वे जना इति हि तत्र निर्वाहः , तद्वदिहापि परमात्माधीनानि सर्वाणि भूतानीति [8]भाव इति वर्णयन्ति । अपरे तु – घटशरावादयस्सर्वे मृत्पिण्ड एवेतिवत् जगद्ब्रह्मणोरेकद्रव्यत्वं परिकल्प्यैवेदं सामानाधिकरण्यं निर्वाह्यमित्याचक्षते ॥

सिद्धान्तस्तु - देवोऽहं मनुष्योऽहमित्यादिवच्छरीरात्मभावसम्बन्धेनैव जगद्ब्रह्मसामानाधिकरण्यनिर्वाहः संभवति सति वाऽौपचारस्वरूपैक्यपक्षा वैदिकैर्वहिष्कार्या इति ॥ ७ ॥

पुनरप्येनमीशेशितव्यतत्त्ववेदिनं वेदितव्यस्वरूपशोधनेन च विशिषन् [9]ज्ञानयोगादिकमप्युपदिशति **स पर्यगात् ...समाभ्यः ॥**

**सः** - सर्वभूतान्तरात्मभूतब्रह्मदर्शी , **पर्यगात्** - पर्यगच्छत् प्राप्नुयादित्यर्थः : "ब्रह्मविदाप्नोति परम्" इति न्यायात् । यद्वा समाधिलब्धेनानुभवेन [10]प्राप्तवानिति सिद्धानुवादः , "अत्र ब्रह्म समश्नुते" इतिवत् । **शुक्रम्** - अवदातम् , स्वप्रकाशरूपमित्यर्थः । "न तस्य प्राकृतामूर्तिर्मांसमेदोऽस्थिसंभवः" इति देयशरीरस्यैवान्यत्र प्रतिषेधदर्शनात् ; न तु दिव्यमंगलविग्रहरहितमित्यर्थः । "यत्ते रूपं कल्याणतम

पा० [1] ज्ञानेन दर्शन ग. । ज्ञानेऽनुदर्शन - ख ।
[2] अद्यतनसाक्षात्कार - ग. घ. ।
[3] संशयनीयः - ग. घ. । [4] ख. ।
पर्यगात् प्राप्नुयात् - ग. घः ख. पुस्तके कूरनारायणीय इव पर्यगच्छदिति युक्तम् ; परिगंवीचदित्यशुद्धम् ।
[6] स्वेति नास्ति - ख. ।
[7] बाधायां - क. ।
[8] भावं वर्णयन्ति - ख. ।
[9] ध्यान - ख. ।
[10] उपलब्धवानिति - ख. ।

भा० **अकायम्** - सर्वशरीरकमपि [1]कर्मकृतशरीररहितम् ; अत एव अव्रणमस्नाविरं च । **शुद्धम्** - अनाघ्राताज्ञानादिदोषम् । **अपापविद्धम्** - अज्ञानादिकार्यकारणभूतपुण्यापुण्यरूप- [2]कर्मानालीढमित्यर्थः । "न सुकृतं न दुष्कृतम्" इत्यारभ्य "सर्वे पाप्मानोऽतो निवर्तन्ते" इति हि निगम्यते । एवमशेषहेयप्रत्यनीकः परमात्मा मुमुक्षोः प्राप्यः प्रापक उपास्यश्चेत्युक्तं भवति (उपास्यश्च [3]स्यात्) ।

**स** इत्युक्तमेव[4] ब्रह्मविदमतीन्द्रियसर्वार्थदर्शित्वादिना[5] विशिनष्टि - **कविः** — क्रान्तदर्शी । व्यासादिवत् [6]परतत्त्व[(i)] (परतत्त्वतद्गुण[(ii)]) ([(iii)]परतत्त्वतत्स्वरूपरूपगुण- विभूत्यादि) बोधनानुगुणप्रबन्धनिर्माता वा (तेति वार्थः[7]) । **मनस** ईशित्री बुद्धिर्मनीषा ; तद्वान् **मनीषी** ; अभ्यासवैराग्याभ्यां निगृहीतान्तःकरण इत्यर्थः । परितो भवतीति **परिभूः** ; विद्यान्तरवतः सर्वानतिक्रम्य वर्तते । कामक्रोधलोभादीन् दुर्जयानरातीनभिभवतीति वा ।

प्र० तत्ते पश्यामि", "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते", "आदित्यवर्णं तमसः परस्तात्" इत्याद्युपनिषत्प्रसिद्धस्याप्राकृतदिव्यविग्रहस्येह निषेधायोगादिति भावः ॥ **अव्रणं** - कर्मायत्त (मंजन्य) शरीराभावादेवाक्षतम् । **अस्नाविरं** - [8]स्नायु सिरा यस्मिन्विद्यते तत् स्नाविरम् । स्नाविरं न भवतीति अस्नाविरम् । **शुद्धं** - अनाघ्राताज्ञानादिदोषगन्धमशनायादिषड्भिर्रहितञ्च । **अपापविद्धम्** - अज्ञानादेः कार्यभूतैः कारणभूतैश्च पुण्यपापरूपकर्मभिरनालीढमित्यर्थः ॥ "न शोको न सुकृतं न दुष्कृतम्" इत्यारभ्य "सर्वे पाप्मानोऽतो निवर्तन्ते" इति पाप (प्म?) शब्देनोपसंहारदर्शनात् स्वर्गादिहेतुभूतपुण्यविशेषस्याऽपीह पापशब्देन संग्रहणमिति भावः । एवमशेषहेयप्रत्यनीकं परमात्मानं स विद्वान् पर्यगादिति पूर्वेण संबन्धः ॥

एवंरूपः परमात्मा प्राप्यः प्रापक [9]उपास्यश्च यस्य तं ब्रह्मविदं विशिनष्टि — **कविः** - व्यासादिवत्परमपुरुषतत्स्वरूपतद्विभूतितत्कल्याणगुणादिप्रकाशकप्रबन्धविशेषाणां[10] निर्मातेत्यर्थः । अथवा **कविः** - क्रान्तदर्शी ; योगाभ्यासविधुरमनसा दुर्दर्शं परिशुद्धजीवात्मस्वरूपं अतिविशदाविच्छिन्नधारास्मृतिरूपज्ञानयोगनिष्ठ इत्यर्थः । कर्मयोगस्तु "कुर्वन्नेवेह कर्माणि" इति श्लोकेन पुरस्तादेवोक्तः । अथ ज्ञानयोगसाध्य- प्रत्यगात्मसाक्षात्कारहेतुभूतं जीवात्मयोगमाह — **मनीषी** इति । मनस ईशित्री बुद्धिर्मनीषा । तद्वान् मनीषी । सौन्दर्यसौशील्यादिभगवद्गुणानां स्मृत्यभ्यासेनान्यविषयवैराग्येण च निगृहीतान्तःकरण इत्यर्थः । तथा च गीयते — "असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते" इति । निरतिशयसुखरूपस्वात्मसाक्षात्काराय स्वात्मनि मनःप्रणिधानक्रियारूपयोगाभ्यासपर इति भावः । **परिभूः** - कामक्रोधादीन् दुर्जयान् अरातीन् (क्रोधलोभादीन्) परिभवतीति परिभूः । अनेन विरोधिनिवृत्ति-

८. मं. टि. **उपास्यश्च स्या**दिति पाठेऽपि उक्तविधाशेषहेयप्रत्यनीकत्वे सत्येव प्राप्यत्वं प्रापकत्व- मुपास्यत्वञ्च स्यादिति तात्पर्यं प्राह्यम् ॥ ८ ॥

पा० [1] कर्मशरीर - ग. घ. ।
[2] कर्मालीढ - ख. ।
[3] ख. ग. घ. ।
[4] उक्तं ब्रह्मविदं सर्वार्थदर्शित्वेन - ख. ग. घ. ।
[5] अत्र आदिशब्दघटितपाठस्तालकोशस्थ आचार्यचरणैः प्रागेवाभ्यूहितः ।
[6] [(i)] ख ; [(ii)] ग, घ, [(iii)] क ।
[7] ग, घ ।
[8] स्नावाः सिराः यस्मिन् - क, विद्यन्त इति आनन्दाश्रमपाठः ।
[9] उपायश्च - ख. ।
[10] प्रबन्धरूपाणां - ख. ।

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥ ९ ॥

भा० **स्वयंभूः** -अन्यनिरपेक्षसत्ताकः ; नित्यात्मस्वरूपदर्शीति यावत् । **याथातथ्यतोऽर्थान् व्यदधात्** - परमपुरुषार्थतदुपाय[1]तदङ्गतद्विरोधिप्रभृतीन् सर्वान् पदार्थान् यथावद्विविच्य हृदयेन धृतवान् । **शाश्वतीभ्यः समाभ्यः** - यावद्ब्रह्मप्राप्ति सर्वप्रत्यूहशमनार्थमिति भावः ।

यद्वा प्रथमान्तश्च द्वितीयान्तश्च पदजातं क्रमात् परावरात्मविषयतया व्याख्येयम् । तदा **शुक्रम्** - इत्यादिकं सर्वोपाधिविनिर्मुक्तपरिशुद्धजीवपरम् । तमपि च **सः** - परमात्मा **पर्यगात्** परितो व्याप्य स्थितः । कविरित्यादिकं सुगमम् । याथातथ्यत इत्यादि । **अर्थान्** कार्यपदार्थान् **शाश्वतीभ्यस्समाभ्यः** यावद्विलयमवस्थातुं **याथातथ्यतो व्यदधात्** ; न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवान् ॥ ८ ॥

एवं विचित्रशक्तिपरमात्मविषयां कर्माङ्गिकां विद्यामुपदिश्य अनन्तरं केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च निन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिः इत्याह[2] - **अन्धं तमः प्रविशन्ति येऽविद्यामुपासते** इत्यादिना ॥

---

**प्र०** कर्मयोगासेवनमुक्तम् । योगाभ्यासफलमाह — **स्वयंभूः** - अन्यनिरपेक्षसत्ताकः । नित्यनिरतिशयसुखरूपतया स्वात्मदर्शीति यावत् । **याथातथ्यतोऽर्थान् व्यदधात्** । [3]( यथावद्विविच्य **अर्थान्** - प्रणवार्थान् " तस्य वाचकः प्रणवस्तज्जपस्तदर्थभावनम् " इति सूत्रोक्तान् **व्यदधात्** - हृदयेन धृतवानित्यर्थः । ) **अर्थान्** - मोक्षतदुपायतद्विरोधिप्रभृतीन् सर्वान् पदार्थान् **शाश्वतीभ्यः समाभ्यः** यावद्ब्रह्मप्राप्तीत्यर्थः । **याथातथ्यतः** - यथावत् **व्यदधात्** - विविच्य हृदयेन धृतवान् । सर्वप्रत्यूहशमनार्थमिति भावः ॥

अथवा शुक्रमित्यादिद्वितीयान्तपदजातं परिशुद्धजीवपरम् । तमपि **सः** - परमात्मा , **पर्यगात्** - परितो व्याप्य स्थित इति । प्रथमान्तपदजातं परमात्मपरं योजनीयम् । तथा हि **कविः** - स्वतस्सर्वदर्शी ; श्रीपाञ्चरात्रादिप्रणेतेति वा । **मनीषी** - मनःप्रभृतीनां जीवकरणानां नियन्ता । परितो भवतीति **परिभूः** - सर्वव्यापी । स्वयमेव भवति उद्भवतीति **स्वयंभूः** । ' बहुधा विजायते " इत्यादिप्रसिद्धावतारशालीत्यर्थः । अत्र कविरित्यादिना कल्याणगुणविधानात् , छान्दोग्ये " एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः " इति हेयगुणान् प्रतिषिध्य " सत्यकामस्सत्यसङ्कल्पः " इति कल्याणगुणविधानाच्च " निर्गुणं निरञ्जनम् " इत्यादिसामान्यनिषेधस्य हेयगुणनिषेधपरत्वं सुगमम् । **याथातथ्यत** - इत्यादि । **अर्थान्** - कार्यपदार्थान् , **शाश्वतीभ्यः समाभ्यः** - यावद्विलयमवस्थातुम् , **याथातथ्यतः** - यथावत् , **व्यदधात्** - विविच्य उत्पादितवान् । न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवानिति भावः ॥ ८ ॥

एवं विचित्रशक्तिपरमात्मविषयां कर्मयोगाङ्गिकां विद्यामुपदिश्य अनन्तरं त्रिभिः श्लोकैः केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान् विनिन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निःश्रेयसावाप्तिमाह -

---

पा० [1] तदुपायतद्विरोधि - ग , घ ।
[2] वाप्तिमाह - क , ग , घ .
[3] ( ) एवं चिह्नितग्रन्थः - क, लिखितकोशे नास्ति । मुद्रिते त्वयमधिकपाठः । तत्सत्त्वे उपरि यद्वेति स्यात् ।

**अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥**

**भा०** ये भोगैश्वर्यादिप्रसक्ताः[1] । **अविद्यां** – कर्म, ज्ञान (अविद्यां ब्रह्मज्ञान[2]) विधुरकर्ममात्रम् । "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते" इति हि स्मर्यते । **उपासते** - एकान्तमनसोऽनुतिष्ठन्तीत्यर्थः । ते[3] **अन्धं** – अतिगाढम्, **तमः** – अज्ञानम् त्रिवर्गाभिषङ्गाख्य (इत्ना[4]) न्तरीयकं नारकं तमो वा । केवलकर्मनिरतानां दुःखानुवृत्तिमधीयते चाथर्वणिकाः; "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति" इति ॥

**ततो भूय इव ते तमो य उ विद्यायां रताः ।** कर्ममात्रनिष्ठप्राप्यादन्धतमसात् अधिकं तमः [5]स्वाधिकारनियतकर्मपरित्यागेन विद्यामात्रे रताः प्रविशन्ति । इवशब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति । उकार उत्तरपदेनान्वेतव्यः, विद्यायामेव रता [6]इत्यर्थः ॥ ९ ॥

किं तर्हि मोक्षसाधनमित्यत्राह – **अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्ययेति ॥**

**प्र० अन्धं तमः – रताः ।** बृहदारण्यके चायं मन्त्रः पठितः । **ये** - भोगैश्वर्यप्रसक्ताः । **अविद्यां** - विद्यान्यां क्रियां, केवलकर्मेत्यर्थः । विद्याविधुरं कर्मेति यावत् । "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते" इति स्मृतेः । **उपासते** - एकान्तमनसा (सो) ऽनुतिष्ठन्ति । ते **अन्धं तमः** - अतिगाढं तमः अज्ञानमित्यर्थः । त्रिवर्गाभिषंगानान्तरीयं नारकं तमो वा । अधीयते चाथर्वणिकाः – "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति" इति । **य उ विद्यायां रताः ।** उकार उत्तरपदेनान्वेतव्यः । ये स्वाधिकारोचितकर्मपरित्यागेन विद्यायामेव रताः, **ते तमः** - कर्ममात्रनिष्ठप्राप्यादन्धतमसात्, **भूय इव तमः** - [7]तदधिकमज्ञानं प्रविशन्ति । **इव**शब्दस्तमस इयत्ताया दुर्ग्रहत्वं द्योतयति ॥ ९ ॥

किं तर्हि मोक्षसाधनमित्यत्राह - **अन्यदेवाहुः** ... [8]**विचचक्षिरे ॥**

९. **मं. टि०** मन्त्रे **भूय** इति । "कर्मनिरतानां विद्यानिरपेक्षकर्मस्वरूपं तावन्निष्पद्यत एव । न तु तावन्मात्रेण मुक्तिः । विद्यानिरतानां हेत्वभावाद्विदैव न संभवति; कुतस्तरां मुक्तिरिति भूयश्शब्दाभिप्रायः" इति तत्त्वटीका । **अन्वेतव्य** इति । अनुगन्तव्य इत्यर्थः । 'अयं तमन्वेति', 'तमोङ्कारेणैवायतनेनान्वेति' इतिवत् सकर्मकत्वात् कर्मणि तव्यप्रत्ययः । अत एव 'अन्वीयते' इति श्रीभाष्येऽपि । न्यायकुसुमाञ्जलावपि "सङ्ख्याकर्तारमन्वियात" इत्यादि (५-५५) । **उत्तरपदेने**ति कर्तरि तृतीया । उ इत्येतदुत्तरं वर्तमानेन विद्यायामिति पदेन पूर्वम् **उ** इत्येतदनुगम्यते । वाक्ये आख्यातं प्रधानम् । अतो **रता** इति पदमनुगच्छन्त **उ** इति शब्दमनुगच्छति विद्यायामिति पदम् । तदुपसर्जनीभवतीति यावत् । एवमन्वयमभिधायार्थमाह **विद्यायामेवे**ति ॥

**पा०** [1] भोगैश्वर्यप्रसक्ताः - **क, ग, घ** ।
[2] **ख** ।
[3] ते इत्यधिकं - **ख** । [4] **ख** ।
[5] स्वाधिकारोचित - **ग, घ** ।
[6] रता इति - **ग, घ** ।
[7] अधिकमज्ञानं विशन्ति ।
[8] व्याचचक्षिरे इति मुद्रयित्वा विचचक्षिरे इति शोधितमान्ध्रकोशे अत्र मन्त्रे, १३ मन्त्रे च ।

विद्यां चाविद्यां च यस्तद्वेदोभयँ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

भा० अत्र व्यत्ययानुशासनात् पञ्चम्यर्थे तृतीया, अन्यथा[1] श्रुत्यशब्दानन्वयात् । अन्यदेवाहुः संभवात् इति वक्ष्यमाणसारूप्याच्च । [2]एवं केवलकर्मणः कर्मनिरपेक्षविद्यातश्च अन्यत् मोक्षसाधनमित्युक्तं भवति । आहुः पूर्वाचार्या इति शेषः ; औचित्यात् उपनिषद इति वा । सत्संप्रदाय (पूर्वपूर्वसंप्रदाय[3]) सिद्धोऽस्माकमयमर्थ [4]इत्याह — इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे इति । ये — पूर्वाचार्याः, [5]नः - प्रणिपातादिभिः सम्यक् उपसन्नानामस्माकम्, तत् - मोक्षसाधनम्, विचचक्षिरे — विविच्योपादिशन् । तेषां धीराणां — परमात्मध्यानपराणाम् । वचनमित्यध्याहार्यम् । नटस्य शृणोतीतिवद्वा कथंचित् पञ्चम्यर्थे षष्ठी । इति शुश्रुम - एवंप्रकारमश्रौष्म । ब्रह्मविद्यायाः दुरवगाहत्वेन निश्शेष-ग्रहणाशक्यत्वाभिप्रायोऽत्र लिडुत्तमः ॥ १० ॥

अन्यदिति संग्रहेणोक्तं विवृणोति - विद्यां चाविद्यां च यस्तद्वेदोभयं सह इति ॥

प्र० विद्ययेति पञ्चम्यर्थे तृतीया । [6]यथाश्रुतेऽन्यशब्दानन्वयात् "अन्यदेवाहुस्सम्भवात" इति वक्ष्यमाणानुसाराच्च । तथा च विद्यायाः कर्मरहितविद्यातः अन्यत् मोक्षसाधनमित्याहुः । उपनिषद इति शेषः । अविद्ययेति च पूर्ववत् पञ्चम्यर्थे तृतीया । अविद्यातः ब्रह्मज्ञानविधुरकर्मणश्चान्यदेव मोक्षसाधन-मित्याहुरुपनिषद इति भावः । पूर्वपूर्वसम्प्रदायसिद्धो[7]ऽयमर्थोऽस्माकमित्याह - इति शुश्रुम इति । ये - पूर्वाचार्याः, नः - प्रणिपातादिभिस्सम्यगुपसन्नानामस्माकम्, तत् - मोक्षसाधनं, विचचक्षिरे - विविच्योपादिशन्, तेषां धीराणां - धीमताम् । पञ्चम्यर्थे षष्ठी । तेभ्यो धीरेभ्य इति [8]योज्यम् ; नटस्य शृणोतीतिवत् । (नटाच्छृणोतीत्यर्थः ।) इति शुश्रुम - एवंप्रकारमश्रौष्म (ष्म ?) ॥

ननु परोक्ष एवार्थे लिड्विधानात् 'शुश्रुम' इति [9]लडुत्तमपुरुषो न घटत इति चेत् मैवम्, ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणमस्माभिर्न [10]कृतमित्यभिप्रायकत्वाल्लिडुत्तमस्येत्याहुः ॥ १० ॥

अन्यदिति सामान्येनोक्तं मोक्षसाधनं विवृणोति - विद्याञ्चाविद्याञ्च........अश्नुते ॥

१०. मं. टि० व्याचचक्षिरे इति मूलपाठमुद्रण ग. प्रतिकोशेऽमुद्र केनोपनिषद्भाष्याऽऽयनम् । विचचक्षिरे इत्येव पाठ । काण्वमाध्यन्दिनभेदेनात्र पाठभेदवचनमपि केषाञ्चिदसन्मूलम् ॥

पा० [1] अन्ययेति नास्ति - ग, घ : अन्यथा शब्दानन्वयात् - ख. ।
[2] एवमिति नास्ति - ख, ग, घ. ।
[3] सत्संप्रदाय - क, ख ; पूर्वपूर्वसंप्रदाय - घ, प्रागस्मन्मुद्रितेऽप्येवम् । सर्वसंप्रदाय - ग. ।
[4] इत्यत्राह - ग. ।
[5] नः इति अस्माकमिति च नास्ति - ग. ।
[6] यथाश्रुतत्वे. ।
[7] अर्थोऽयम्. ।
[8] योजनीयम् - ख. ।
[9] लिडुत्तम - ख. ।
[10] इत्यभिप्रायं कृत्वा लिडुत्तमस्योपपत्तेः - ख. ।

भा० **यः** - यथावस्थितोपदेशवान् (शात्[1]) । **विद्यां** — परमात्मोपासनरूपाम् । **अविद्यां** — तदङ्गभूतकर्मात्मिकां च । [2]**तदुभयं** — परस्परविरोधप्रसङ्गरहितम् **सह वेद** — [3]अङ्गाङ्गिनोरप्यनु (रनु) ष्ठेयत्वसाम्यात् उभयं सह वेद इत्यविशेषेण वेदनीयतोक्तिः; न पुनः हेयोपादेययोः ज्ञातव्यत्वसाम्यात् । पूर्वमविद्याया[4] निन्दनात् तदौचित्यमिति चेत् — तर्हि विद्याया अपि निन्दिततया[5] हेयद्वयसमुच्चयोक्तिप्रसङ्गः । तथा सत्युत्तरवाक्यमपि [6]विघटेत, 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इति । * अय( तदय )मर्थः — **अविद्यया** - विद्याङ्गतया चोदितेन[7] कर्मणा, **मृत्युं** — ज्ञानसंकोचरूपमृतिहेतुं[8] प्राक्तनं[9] कर्म ।

प्र० "कुर्वन्नेवेह कर्माणि" इति श्लोके कर्मयोगस्य प्रत्यगात्मदर्शनद्वारा परभक्त्युत्पादकत्वमुक्तम् । इह तूत्पन्नभक्तियोगेन विदुषा पूर्वोक्तकर्मयोगत्वं परित्यज्याहरहरनुष्ठीयमानानां नित्यनैमित्तिककर्मणां कल्मषनिबर्हणद्वारा भक्तियोगोपचायकत्वमुच्यते । सहशब्दस्वारस्यात् । अतो न पुनरुक्तता ॥

**यः** - यथावस्थितविद्योपदेशवान्, **विद्यां** - ब्रह्मोपासनरूपाम्, **अविद्यां** - तदंगभूतकर्मात्मिकाञ्च, **एतदुभयं सह वेद** अंगांगिभावेन सहानुष्ठेयं वेदेत्यर्थः । अत्र अविद्याशब्दः क्षत्रियविषयकाब्राह्मणशब्दवत् तदन्यत्वरूपा विद्यांगकर्मविषय इति भावः । **अविद्यया** - [10]विद्यांगतया चोदितेन कर्मणा, **मृत्युं** - विद्योत्पत्तिप्रतिबन्धकभूतं पुण्यपापरूपं प्राक्तनं कर्म, **तीर्त्वा** - निरवशेषमुत्क्रम्य, **विद्यया** - परमात्मोपासनरूपया, **अमृतमश्नुते** - मोक्षं प्राप्नोतीत्यर्थः । **तीर्त्वे**त्यत्र उपायविरोधितरणमुच्यते । **अमृतमश्नुत** - इति तु उपेयब्रह्मप्राप्तिविरोधिभूतेभ्यस्सर्वपापेभ्यो मोक्ष इति भेदः । एवं च सति — "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥" — ज्ञानव्यपाश्रयः शास्त्रश्रवणजन्यब्रह्मज्ञानवान् **सः** - [3]जनकोऽपि ब्रह्मविद्यां निदिध्यासनरूपामधिष्ठाय फलत्वेनाश्रित्येत्यर्थः । भक्तियोगोत्पत्ति

११. मं. टि० **विद्याञ्चाविद्याञ्चे**ति । अत्र श्रुतप्रकाशिका, "**चशब्दावनुक्तसमुच्चयपरौ** । ...... ... विद्यानुबन्धिशमदमादिकं कर्मानुबन्धिफलाभिसंधिकर्तृत्वाभिमानराहित्यादिकं ..........समुच्चेतव्यम् । यद्वा विद्याविरोधि ........... तदितरविषयज्ञानतद्विषयरागद्वेषादिकम् । अविद्या ............ विद्यांगं कर्म; तद्विरोधि ............ फलाभिसंध्यादिसहितं कर्म पापञ्च हानार्थे ज्ञातव्यम् । .......यद्वा प्रतिपदद्योतकौ चशब्दौ" इति । तत्त्वटीका च, "चकारावत्रोक्तार्थसमुच्चयार्थौ । तयोरनुक्तद्योतकत्वे तु तत्तदितिकर्तव्यताविशेषयोः एव विद्या (एव विद्याऽविद्या?) फलयोः निवर्त्ययोश्च प्राप्त्युपायविरोधिनोर्ग्रहणम्" इति ।

पा० [1] ख. । [2] एतदुभयं - ग, घ. ।
[3] रप्यनु - क, ख. ।
[4] अविद्यानिन्दनात् - क, ख. ।
[5] निन्दिततया - क, ख; निन्दितायाः - ग. ।
[6] विघटते - ग, घ. ।
[7] चोदितकर्मणा - ग, घ. ।
[8] मृत्युहेतुं - ग, घ. । अत्र मृत्युप्रतिहेतुमित्यौचित्यादालोचितम् । व्यर्थमुत्पत्तिपदं विनैव पाठो लब्धः ।
[9] प्राक्तनकर्म - ग, घ. । * पूर्वम् अयमर्थ इति ग. प्रभृतिकोशेषु । तदयमर्थ इति च क, ख. कोशयोः । (तत्र तदित्यस्य अविद्यापदस्य हेयपरत्वाभावादनुष्ठेयपरत्वादित्यर्थो भाव्यः ।) अतः इत्यर्थ इत्यत्र अर्थ इति न स्यात् । कथञ्चित्, उल्लंघ्येत्यन्तेनैव अयमर्थ इत्यारब्धमवसितम् । अतो विद्ययेत्यादेः पृथग्वाक्यत्वात् पुनरपि अर्थ इति पदमिति रीत्या वा वक्तव्यम् ।
[10] विद्याङ्गरूपतया - ख. ।

भा० तीर्त्वा – निरवशेषमुल्लंघ्य, विद्यया – पूर्वोक्तपरमात्मानुदर्शनरूपया, अमृतमश्नुते – "एतदमृतमभयमेतद्ब्रह्म" इत्यादिषु सर्वदोषरहितत्वेन प्रतीतं परमात्मानं प्राप्नोतीत्यर्थः (प्राप्नोतीति ?)। अत्रामृतशब्दस्य मोक्षपरत्वेऽपि न पुनरुक्तिः। मृत्युं तीर्त्वा — इत्यस्योपायविरोधिनिरसनपरत्वात् अमृतमश्नुत इति प्राप्तिविरोधिनिवृत्तिलाभोक्तेः ॥

अत्र 'अविद्यया मृत्युं प्राप्य स्थितः' इति व्याचक्षाणः निर्बाधं पदवाक्यस्वारस्यमुपबृंहणं च प्रस्मृत्य स्वाविद्यया स्वयमेव मृत्युं प्राप्य स्थिताः। एतदेव वाक्यमनुसंहितं वैष्णवे पुराणे "इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया" इति। इह त्वविद्याशब्दः प्रकरणादौचित्याच्च विद्याङ्गकर्मविषय इत्यभाषि (¹ष्यत) भाष्यकारैः, "अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म" इति, "मृत्युतरणोपायतया प्रतीताऽविद्या विधिविहितं कर्मैव" इति च। विद्यां पर्युदस्यन्नयमविद्याशब्दः क्षत्रियादि-विषयाब्राह्मणशब्दादिवदासन्नतदन्यवृत्तिरङ्गकर्मविषय इति भावः। एवं "तपो विद्या

प्र० कामयमान इति यावत्। मृत्युं मत्युत्पत्तिविरोधि प्राचीनं कर्मजातम् अविद्यया अनभिसंहितफलेन विद्यांगकर्मणा तर्तुं व्यपोहितुं सुबहून् यज्ञान् ज्योतिष्टोमादिकान् इयाज अकरोदित्यर्थः। ¹पाक पचतीतिवन्निर्देशः। — ²तथा च "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः"। — "भगवदाराधनरूपाणि अनभिसंहितस्वर्गादिफलानि कर्माणि कषायस्य उभयविधपापस्य तज्जन्यरागद्वेषादेर्वा पक्तिः विनाशकारणानि। ज्ञानं तु परमागतिः - परमगति-

टि० मोक्षपरत्वेऽपीत्यपिना अमृतमिति अश्नुत इति च पदस्वारस्यात् भोग्यभूतब्रह्मानुभवरूपोऽर्थः श्रीभाष्योक्त एव साधीयानिति ज्ञाप्यते। विरोधिनिवृत्तीति। तत्त्वटीकायाम्, "मोक्षशब्दस्वारस्यानुरोधात.. ......बन्धकर्मनिवृत्ति ......मात्रमेवोपासनसाध्यम्। भोगेच्छाहेतुनिवृत्तौ सेतुभङ्गेन प्रवृत्तिनीत्या तादृशेश्वर-सङ्कल्पेन स्वतःप्राप्तो धीविकासः" इति। व्याचक्षाणा इति। यद्यपि मन्त्रोऽयं कर्मसगुणोपासनोभय-परतयैव शाङ्करभाष्ये योजितः — अथापि निर्गुणब्रह्मप्रकरणानुगुण्याय ब्रह्मसिद्ध्यादिग्रन्थेऽन्यथा व्याख्यातः। यथा भावप्रकाशिकायां काचन योजनाऽनूदिता। सिद्धान्तसिद्धाञ्जनेऽपि - मन्त्रे सहेत्येतत् पदमित्येव साम्प्रदायिकमिति लिखित्वैव कर्मज्ञानयोर्विरोधात्साहित्यासम्भवात्सहशब्दार्थस्य स्वमतेऽनुपपत्त्या पञ्चम्यन्तप्रतिसंबन्धि स इति पृथक्पदम्, हेति पृथगव्ययमिति लिखितम्। एवमित्थमपि कर्तायन्मृषावादिना निर्गुणप्रकरणाविरोधेन कृतं व्याख्यानं श्रुतप्रकाशिकायामत्र चानूद्यते। शाङ्करयोजनान्तराण्यपि सम्भावितया तत्त्वटीकादौ दर्शितानि। अतस्माक्षाच्छाङ्करोक्तयोजनाया अन्यत्वेऽपि न विरोधः। श्रीभाष्यस्य तु सर्वपरोक्तविरुद्धार्थदूषणाभिप्रायेण गभीरा गतिरिति। विहितं कर्मेति। "अविद्याशब्देन विद्येतरत् वर्णाश्रमाचारादि पूर्वोक्तं कर्मोच्यते।

पा० ¹ ख.। ²आसन्नतदन्यवृत्तिः - ग.।
³ स इत्यस्य केशिध्वज इत्यर्थः प्रकरणात् (श्री. वि. पु. ६. ६. १२.) तस्यापि जनकवंश्यत्वात्तु जनक इत्युक्तम्; तथा दर्शनात्।
⁴ पाकं पपाचेतिवत् - ख. 'निर्देश' इति च नास्ति।
⁵ यथेति मुद्रितपाठे यकारस्थाने तकारस्स्यात्। लिखितपुस्तके तथा चेति दृश्यते। एवं च सतीत्यारब्धं हि 'सुसङ्गतानि भवेयु-रित्यन्तेऽन्वितम्। तथा च अत्र तथा-पदं इयाजेत्युपबृंहणसमुच्चायकम्।
⁶ परम - भगवदाराधनरूपाणीत्यनभिसंहित - ख.।

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ॥ १२ ॥

भा० च विप्रस्य निःश्रेयसकरावुभौ । तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते " इत्युपबृंहणा-न्तराण्यपि[1] सुसङ्गतानि भवेयुः ॥

ये पुनरिह विद्याकर्माख्यसाधनद्वयसमुच्चयं मृत्युतरणामृतत्वप्राप्तिरूपसाध्यद्वित्वं च वर्णयन्ति, तेषां कर्मज्ञानयोरङ्गाङ्गिभावं विद्ययैव मृत्युतरणं च व्यक्तं प्रतिपादयद्भिः श्रुतिस्मृतेतिहासपुराणैर्यथाभाष्यमुत्तरं देयम् । विषमसमुच्चयवादेऽपि यथागमं[2] कर्मणां सन्निपत्योपकारकत्वसंभवे गत्यन्तरगमनिका नीति[3]विद्भिर्न संमन्यते ॥ ११ ॥

तदेवमुपास्यं परमात्मतत्त्वं साङ्गतदुपासनरूपं च परमहितं परमपुरुषार्थपर्यन्त-मुपदिश्य अनन्तरं त्रिभिः श्लोकैः प्रतिबन्धनिवृत्तिपरब्रह्मानुभवरूपयोः फलपर्वणोः समुच्चित्यानुसन्धानं विद्याङ्गत्वेनोपादेयमित्युच्यते । तत्र प्रथममेकैकमात्रानुसन्धानं निन्दति–

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥ इति ।

प्र० साधनमित्यर्थः । उभयत्रापि [4]कारणे कार्योपचारः – " कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ", " तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ । तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥ " इत्यादीन्युपबृंहणशतानि सुसंगतानि भवेयुः ॥ ११ ॥

एवं समाधिनिष्पत्तेरन्तर्मिसंहितफलनिरपेक्षनित्यनैमित्तिककर्मसाध्यत्वमुपदिश्य अनन्तरं त्रिभिः श्लोकैर्निषिद्ध-निवृत्तिरूपयोगाङ्गसाध्यत्वमाह । तत्र प्रथमं [5]पूर्ववदेकैकमात्रनिष्ठान् विनिन्दति – **अन्धं तमः.........रताः** ।

" एतमितः प्रेत्याभिसंभवितास्मि ", " ब्रह्मलोकमभिसंभवानि " इत्यादिषु प्राप्तिरूपा अनुभूतिः संभूतिशब्देनोक्ता । इह तु समाधिरूपा सा **सम्भूतिशब्देनोच्यते** । **असंभूतिशब्दस्तु** समाधिरूपसंभूत्यन्यः समाध्यंगभूतां निषिद्धनिवृत्तिमाह; " **संभूतिश्च विनाशश्च** " इत्युत्तरत्र विनाशशब्देन असंभूतेः [6]अनुवादात् । तथा च **ये** विद्याधिकारिणः **असंभूतिमेव** मानदंभहिंसास्तेयादीनां योगविरुद्धानां निवृत्तिमेवोपासते; निवृत्तिमात्रनिष्ठा इत्यर्थः । **ते अन्धं तमः प्रविशन्ति** इति पूर्ववदर्थः । ये पुनः

टि० विद्याशब्देन च भक्तिरूपापन्नं ध्यानम् " इति वेदार्थसंग्रहेऽप्युक्तम् । विहितकर्मणो विहितत्वाद्याकारेणैव विद्याप्रत्यासन्नत्वेन विद्यनरतया शीघ्रग्रहणमिति भावः । नन्वेतन्मन्त्रादिषु मृत्युतरणानन्तर्यममृतप्राप्तावेव प्रतीयते, न तु विद्यायाम् । अतः कथं विद्याङ्गत्वं कर्मण इत्यत्राह **ये पुन**रिति । ये यादवप्रकाशादयः । **गत्यन्तरम्** आरादुपकारकत्वं भास्करमतम् ॥ ११ ॥

१२. मं. टि० **प्रतिबन्धविनाशो**ऽयं प्रस्तुतसमाधिप्रतिबन्धनिवृत्तिर्वा वस्तुतस्सुकृतदुष्कृतहानिरेव वेदान्ताचार्यभाष्यतात्पर्यं द्रष्टव्यम् ॥

पा० [1] उपबृंहणान्यपि - ग, घ । [2] यथाभागं सति - ग, घ । [3] नीतिविद्भिः - ख । [4] करणे - ख । [5] एकैकमात्रं - क । [6] अनुविधानात् - क ।

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

संभूतिं च विनाशं च यस्तद्वेदोभयँ सह ।
विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते ॥ १४ ॥

भा० "एतमितः प्रेत्याभिसंभवितास्मि" "धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि" इत्यादिषु ब्रह्मप्राप्तिरूपा सम्भूतिरुक्ता । तां पर्युदस्यन्नयम् असम्भूतिशब्दः तदासन्नप्रतिबन्धविनाशमभि (¹प्रभिसं) धत्ते । "संभूतिं च विनाशं च" इत्यपि ह्यनन्तरमुच्यते । न चात्र असम्भूतिशब्देन सम्भूतेरनुत्पत्तिर्विनाशो वा प्रतिपाद्यः, अमृतप्राप्तिहेतुतयोक्तायाः सम्भूतेः प्रागभावस्य प्रध्वंसस्य वा मृत्युतरणहेतुत्वेन वक्तुमयुक्तत्वात् । अत्रापि तरतेः प्राप्तिवचनत्वं पूर्ववत् प्रतिक्षेप्यम् ॥ १२ ॥

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ इति ।

अत्र तच्छब्दः समुच्चित्यानुसन्धेयतया वक्ष्यमाणद्वितयं वक्ति ॥ १३ ॥

अत्राप्यन्यदित्युक्तं विवृण्वन् विद्याङ्गमुभयानुसन्धानमाह – सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह इति ॥ तस्यैव फलप्रदर्शनेनावश्यकर्तव्यतां ख्यापयति - विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते इति ॥

अनुसन्धीयमानेन विनाशेन प्रतिबन्धमपोह्य सम्भूत्याऽनुसन्धीयमानया ब्रह्म प्राप्नोति । सम्भूतिविनाशानुसन्धानरूपेऽङ्गे स्तुत्यर्थं यथोचितमङ्गिफलनिर्देशः ॥

प्र० समाधिरूपसंभूत्यामेव रताः, ते ततः भूय इव बहुतरमिव तमः प्रविशन्तीत्यर्थः ॥ १२ ॥

किन्तर्हि मोक्षसाधनमित्यत्राह - अन्यदेवाहुः... ..... .....विचचक्षिरे ॥

संभवात् - सभूतेः, असंभवात् असंभूतेरित्यर्थः । केवलात्संभवादसंभवाच्च अन्यदेव मोक्षसाधनमित्युपनिषद आहुः । लिङ्गनमः पूर्ववत् । स्पष्टमवशिष्टम् ॥ १३ ॥

अन्यदित्युक्तं विवृणोति - संभूतिश्च... .. ......अश्नुते । संभूतिश्च समाधिरूपब्रह्मानुभूतिश्च विनाशश्च - मानदर्पहिंसास्तेयबहिर्मुखेन्द्रियवृत्तिविशेषरूपा ये योगविरोधिनः तेषां विनाशं वर्जनम् इत्येतत् उभयं यो विद्वान् अङ्गाङ्गिभावेन सह वेद । स विद्वान् । विनाशेन, निषेव्यमाणेनेति शेषः ।

१४. मं. टि० मन्त्रोऽयं श्रुतप्रकाशिकायामक्षरव्यत्ययिकरणे यादवप्रकाशपक्षप्रतिक्षेपपूर्वकमित्थं व्याख्यातः – "संभूतिशब्दस्संभवत्यनेनेति संभूतिरिति व्युत्पत्त्या मार्गपरः — विनाशशब्दश्च सुकृतदुष्कृतविनाशविषयः । अतो मार्गस्य कर्मविनाशस्य च चिन्तनमिह विद्यांगत्वेन समुच्चित्य विधीयते" इति । आचार्यभाष्यतात्पर्ये

पा० ¹ अभिसन्धत्ते - क. ख. ।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥

**भा०** यद्वा विनाशेन मृत्युं तीर्त्वेति पूर्वोक्तसरूपशब्दे विरूपार्थपरिहाराय विनाशशब्देन मानदम्भादीनाम्, हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां च विनाशो विवक्षितः । अतो विरुद्धनिवृत्तिरूपाङ्गसेवनेन समाधिविरोधिपापमपाकृत्य समाधिनिष्पत्तिरूपब्रह्मसम्भूत्या तदेवाश्नुते ॥

अत्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयादिविवक्षया मृत्युतरणामृतप्राप्तिरूपफलविभागवचनस्यौचित्यलवोऽपि नोपलभ्यते ॥ १४ ॥

अथ [1]एवं फलपर्यन्तसाङ्गब्रह्मविद्यानिष्ठस्यानुसन्धेया[2] मन्त्रा उपदिश्यन्ते । तेषु च पूषादिशब्दाः [3]सर्वशब्दवाच्यं परमात्मानमनुसंदधतां तत्तद्देवताप्रणाड्या साक्षाद्वा तत्पर्यन्ताः । अत्र हि यमसूर्यादिशब्दानामेकविषयत्वं स्वरसावगतं तथासत्येवोपपद्यते । तत्र प्रथमेन मन्त्रेण [4]पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुतां स ( [5]प्रस्तुतस )माधिप्रतिबन्धनिवृत्तिं प्रार्थयते — हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ इति ।

**प्र०** विरोधिनिवृत्तिरूपयोगाङ्गसेवनेनेत्यर्थः । **मृत्युं** - समाधिविरोधिपापं, **तीर्त्वा** - अपाकृत्य निष्पन्नया **संभूत्या अमृतमश्नुते** - प्राप्तिरूपां संभूतिमेवाश्नुत इति भाव. । अयमेव दंभादिविनाशो बृहदारण्यके — 'तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति बाल्यशब्देन विधानतया विहितः ॥

अत्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयविवक्षया कार्यहिरण्यगर्भस्य अव्याकृतप्रधानस्य चोपासनं विधीयत इति शाङ्करव्याख्यानमनुपपन्नम् । तथा सति मृत्युतरणामृतत्वप्राप्तिरूपफलवचनानौचित्यादिति ॥१४॥

एवमाचार्यः [6]साङ्गां भगवद्भक्तिमुपदिश्य अथ तन्निष्ठस्यानुसंधेयं मन्त्रद्वयमुपदिशति[7] । तत्र प्रथमेन मन्त्रेण पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुत. समाधिप्रतिबन्धकनिवृत्तिं प्रार्थयते - **हिरण्मयेन............ दृष्टये** ॥

**टि०** एतद्विमर्शोऽप्यनुसन्धेयः । **न्यायसिद्धाञ्जने**ऽप्युक्तम् – (जीवपरि) "एवमर्चिरादिगतिः कर्मणामन्यसंक्रान्तिश्च संभूतिविनाशशब्दाभ्यामुच्यते । कर्मणां विनाशेन हि संसारतरणम् । अर्चिरादिसंभूत्या च ब्रह्मप्राप्तिः" इति, "संभूतिशब्दः प्राप्तौ बहुशः प्रयुक्त" इति, "नारायणार्यैस्तु संभूतिविनाशशब्दौ — लक्षणया विद्याकर्मविषयावुक्तौ । एवञ्च विद्यां चाविद्यां चेत्यादिश्रुत्यैकार्थ्यं स्यात" इति च ॥ ऐकार्थ्ये पौनरुक्त्यादर्थान्तरं युक्तमित्यपि तदाशयस्स्यात् ॥

**१५. मं. टि० एतदादिमन्त्रचतुष्टयं बृहदारण्यके उपान्त्ये पञ्चदशे ब्राह्मणे द्रष्टव्यम् । रजोमयेने**ति । रजोरूपेणेत्यर्थः । तथा च **वाकार**पाठदर्शनात् 'रजसा तमसा चास्य मानसं समभिप्लुतम्'

**पा०** [1] अथ फल - **क.** ।
[2] न केवलं **क.** कोशे , **ग.** कोशे शोधनिकायामपि साङ्गब्रह्मविद्यानिष्ठस्येति पाठ एव प्रादर्शि ।
[3] सर्ववाच्यं - **ग, घ.** ।
[4] पूषन्शब्द - **ग.** । [5] **क.** ।
[6] साङ्गं भक्तियोगमु - **ख.** ।
[7] अनुसंधेयमन्त्र - **क.** ।

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ॥ १६ ॥

भा० सत्यशब्दोऽत्र जीवपरः । "सत्यं चानृतं च सत्यमभवत्", "अथ नामधेयं सत्यस्य सत्यम्, प्राणा वै सत्यम्, तेषामेष सत्यम्" इत्यादिषु जीवेऽपि तत्प्रयोगात् । तस्य **मुखम्** - अनेकेन्द्रियावष्टम्भतया मुखवदवस्थितं मनः, **हिरण्मयेन पात्रेणापिहितम्** - रागात्मकतया हिरण्मयसदृशेन रजोमयेन पात्रेण परमात्मविषयवृत्तिप्रतिरोधकेन च्छादितम् । हृदि [1]संनिहिते परमात्मविषये निरुद्धवृत्तिकमित्यर्थः । रजःकथनं तमसोऽप्युपलक्षणम् । हिरण्मयशब्देन कर्माधीनभोग्यवर्गप्रदर्शनं [2]वा । **तत्** - जीवस्य मुखस्थानीयं मनः, **पूषन्** — आश्रितपोषणस्वभाव ! **अपावृणु** - निरस्तपिधानं कुरु । कस्य हेतोः ? **सत्यधर्माय दृष्टये** — सत्यस्य जीवस्य धर्मभूताय पूर्वोक्तब्रह्मा[3]नुदर्शनायेत्यर्थः ॥ १५ ॥

पुनरपि तया दृष्ट्या द्रष्टव्यं विशिंषन् [4]दृष्ट्यनुगुणमभ्यर्थयते —

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ॥ इति ।

प्र० हे **पूषन्** - आदित्यान्तर्यामिन् : "य आदित्ये तिष्ठन्" इत्यारभ्य, "य आदित्यमन्तरो यमयति" इति श्रुतेः, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यादिन्यायाच्च । यद्वा, **पूषन्** - आश्रितपोषणस्वभावेत्यर्थः । "साक्षादप्यविरोधं जैमिनिः" इति [5]च सूत्रितत्वात् । **सत्यस्य** । सत्यशब्देनात्र प्रकृत्यादिवत् स्वरूपविकाररहितः जीवात्मोच्यते । "सत्यञ्चानृतञ्च सत्यमभवत्" इत्यादिषु जीवेऽपि सत्यशब्दप्रयोगात् । तस्य **मुखं** - मुखवदनेकेन्द्रियावष्टंभतया मुखसदृशं मन इत्यर्थः । **हिरण्मयेन** - हिरण्मयसदृशेन कर्माधीनभोग्यवर्गेणेति यावत् । **पात्रेण** - परमात्मविषयकवृत्तिप्रतिरोधकेन **अपिहितं** - छादितम् । हृदि निहिते परमात्मविषये निरुद्धवृत्तिकं जातमित्यर्थः । **तत्** - जीवस्य मुखस्थानीयं मनः, **त्वम्** - हार्दाकाशगामीशस्त्वं, **अपावृणु** - निरस्तनिरोधानं कुर्वित्यर्थः । तत् कस्य हेतोः तत्राह **सत्यधर्माय** - सत्यस्य जीवस्य धर्मभूताय, **दृष्टये** - दृष्टिः दर्शनम् । त्वद्दर्शनायेति भावः ॥ १५ ॥

पुनरपि तया दृष्टया द्रष्टव्यं विशिंषन् दर्शनं तत्साधनञ्चाभ्यर्थयते — **पूषन्**............**अस्मि** ॥

**पूषन्** - आश्रितपोषक । एकश्चासावृषिश्च **एकर्षिः** । अद्वितीयो - (या) ऽतीन्द्रियार्थद्रष्टा (ह:) "नान्योतोऽस्ति द्रष्टा" इति श्रुतेः । **यम** - यमयति सर्वानिति यमः । सर्वान्तर्यामिन् । "यः पृथिवीमन्तरो यमयति ......... य आत्मानमन्तरो यमयति" इत्यादिश्रुतेः । **सूर्य** - स्वभक्तबुद्धीनां

टि० इत्युक्तार्थविवक्षया हिरण्मयपदं रजःपरमिति प्रथमव्याख्यानम्, भोग्यवर्गेति द्वितीयमिति गम्यते ॥

१६. मं. टि० **पुरुष** इति । पुरुषशब्दार्थः **तात्पर्यचन्द्रिकायामपि** संगृहीतः, "पुरिशयत्वपूर्वत्वपूरिसद्भावपुरुदानादिभिर्निमित्तै"रिति । पूर्णत्वमन्तर्बहिश्च व्याप्तित्वम् ; अथवा **सहस्रनामभाष्योक्तं** स्वत-

पा० [1] हृदि निहिते - ग, घ.
[2] वाकारो नास्ति - ग, घ. ।
[3] ब्रह्मानुभवदर्शनाय - ग, घ. ।
[4] दृष्ट्या गुण ग, घ. ।
[5] चेति नास्ति - ख. ।

भा० **एकर्षे** - अद्वितीयातीन्द्रियद्रष्टः ! **यम** – सर्वान्तर्यामिन् ! **सूर्य** - स्वभक्तबुद्धीनां सुष्ठु प्रेरक ! **प्राजापत्य** – प्रजापतिप्रसूतस्य सर्वस्यान्तर्यामिन् ! अविवक्षितप्रत्ययार्थो वा प्राजापत्यशब्दः । प्रजानां पते इत्यर्थः । **व्यूह रश्मीन् ; समूह तेजः** – स्वस्वरूपप्रकाशानौपयिकान् [1]स्वोग्ररश्मीन् व्यपोह ; प्रभात्मकं च तेजः [2]समूढं कुरु । **यत्** – आदित्यवर्णमित्यादिप्रसिद्धम् [ कल्याणतमम् ? ] सर्वेभ्यः कल्याणेभ्योऽतिशयितकल्याणं शुभाश्रयभूतं, **ते दिव्यं, रूपम् , तत् पश्यामि** । अत्र वर्तमानव्यपदेशः उत्तरवाक्यवत् तात्कालिकानुसन्धानानुवादः । प्रार्थनाप्रकरणानुरोधे तु व्यत्ययेन पश्येयमिति लिङर्थो [3]ग्राह्यः । पुनरुक्तिस्तदसाधारण्यज्ञापनार्था । त्वदर्थं पश्यामीति वा निरुपाधिकशेष( षि )त्वानुगुणोक्तिः ।

अथान्तरात्मनोऽहंग्रहेणानुसन्धान ([1]णोपासन ) माह. **'योऽसावसौ पुरुषः सोऽहमस्मि' इति** । वीप्सा अत्यादरव्यञ्जनार्था । यद्वा "योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तस्सनातनः । सर्वभूतमयोऽचिन्त्यस्स एव स्वयमुद्बभौ" इत्यादिवाक्यच्छायया

प्र० सुष्ठु प्रेरक । **प्राजापत्य** - प्रजापतिश्चतुर्मुखः तस्य सुताः प्राजापत्याः तेषामन्तर्यामिन् । यद्वा प्रजापतिरेव **प्राजापत्यः**, वैश्वानर इतिवत् । विश्वानर एव हि वैश्वानरः । तथा च प्रजानां पतिरिति व्युत्पत्त्या **प्रजापतिः** - विष्णुः । "प्रजापतिश्चरति गर्भेऽन्त." इति श्रुतेः । **व्यूह रश्मीन्** - भवदीयदिव्यरूपदर्शनानुपयुक्तान् स्वोग्ररश्मीन् **व्यूह** - व्यपोह, विगमयेत्यर्थः ॥ यत्तु दर्शनौपयिकं प्रभात्मकं सौम्यं **तेजः**, तत् **समूह** - समूहीकुरु । तत् किमर्थमित्याशंक्य अर्जुनादिवत् द्रष्टुमिच्छामि ते रूपमित्याह **यत्** इति । "आदित्यवर्णं तमसः परस्तात्" इत्यादिषु प्रसिद्धमित्यर्थः । **ते** "आनन्दो ब्रह्म" इति निरतिशयभोग्यस्य [5]तवापि **कल्याणतमं** - सौन्दर्यादिगुणातिशयेन प्रियतमं सर्वेभ्यः कल्याणगुणेभ्यः [6]अतिशयितकल्याणञ्च । शुभाश्रयभूतमित्यर्थः[7] । **ते यद्दिव्यं रूपं, तत् पश्यामि** । पश्येयमिति लिङर्थो ग्राह्यः । लकारव्यत्ययश्छान्दसः । द्रष्टुमिच्छामीति भावः । "अकायमव्रणम्", "अशरीरं शरीरेषु", "अपाणिपादो जवनो ग्रहीता" इत्यादिसामान्यवचनानि "अजायमानः" "अजोऽपि सन्नव्ययात्मा", "न चास्य प्राकृता मूर्तिः" इत्यादिविशेषवचनसिद्धहेयशरीरप्रतिषेधपराणि ॥

टि० एवावाप्तसमस्तकामत्वं ग्राह्यम् । पुरुदानं **पुरु** बहु **सनोति** ददातीति पुरुषशब्दनिर्वचनात् । आदिना पूर्वत्वविशिष्टसर्वपापप्रदाहकत्वमपि विवक्षितम् । "पूर्णः पूरयिता पुण्यः", "स वा अयं पुरुषस्सर्वासु पूर्षु पुरिशयः" (बृ. ४, ५, १८.), "स यत् पूर्वोऽस्मात्सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात्पुरुषः" (बृ. ३, ४, १.),

पा० [1] स्वविग्रहरश्मीन् - क. । [2] समूहीकुरु - ग, घ. । [4] क. । [5] तवातिकल्याणतमं - ख. । [6] अतिशयितं कल्याणञ्च - ख. । [7] इति भावः - क. (भाष्येऽस्मिन् अर्थ इति स्थाने भाव इति बहुलं प्रयुज्यते । )

[3] लिङर्थोऽत्र ग्राह्य इति आन्ध्रलिपिमुद्रणे अत्रेति पदमधिकम् । 'लिङर्थो ग्राह्य इत्यपुनरुक्तिः तदासाधारण्यज्ञापनार्थं सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः' इति ग. पाठोऽशुद्ध इत्याचार्यभाष्यतात्पर्येऽस्माभिः पाठान्तरमुल्लिखितम् । प्रायस्तदनुकूल उपरिनिर्दिष्टस्तालपाठः । तत्र 'त्वदर्थ' मिति पदमेव 'सदे' ति विकृतं स्यादिति घ. कोशदर्शितोऽस्मदाचार्यचरणोल्लेखोऽपि सत्यापित इव तालेन । तत्र सदेति पदादर्शनात् । **पुनरुक्तिरित्यस्य**, ते इत्यस्य पुनरुक्तिरित्यर्थ एव ग्राह्य इति प्रागस्माभिस्तथैव पाठ उल्लिखितः 'इत्य' इत्यक्षरद्वयस्य ग. कोशे स्थितस्यापरित्यागेनेत्यलमधिकेन ॥

**भा०** **यत्तच्छब्दाभ्याम्[1] अदश्शब्दौ विभज्यान्वेतव्यौ । तौ च[2] सर्वेन्द्रियदूरत्वप्रमाणप्रसिद्धत्वद्योतनार्थौ । पुरुषः - [3]पूर्णत्वपुरिशयत्वपूर्वसत्त्वादिगुणकः आदित्यवर्णविग्रहविशिष्टस्सर्ववेदपठितानन्यपरपुरुषसूक्तादिप्रसिद्धो महापुरुषः । सोऽहमस्मि - अहंशब्दोऽत्र जीवद्वारा तदन्तरात्मपर्यन्तः । अत एव अस्मि इत्यपि प्रत्यग्रूपस्वविशिष्टे परमात्मनि विश्राम्यति । 'अस्मद्युत्तमः' इत्येतावदेव ह्यनुशिष्टम्; न पुनरस्मच्छब्दस्य प्रत्यगात्मद्वारा परमात्मपर्यन्ततायामुत्तमनिवृत्तिः । एवं तत्त्वमसीत्यादिष्वसिशब्दोऽपि[4] निर्वाह्यः । तत्रापि "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इत्येतावदेव हि स्मर्यते । न तु युष्मच्छब्दस्य**

---

**प्र०** ननु "यत्ते रूपं कल्याणतमम्", "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः", "ईशावास्यमिदं सर्वम्", "पतिं विश्वस्यात्मेश्वरम्", "सर्वकर्मा सर्वगन्धः", "स्वाभाविकी ज्ञानबलक्रिया च", "तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति", "तस्योदिति नाम" इत्यादिभिः शास्त्रैर्गुणविग्रहादयो [5]ब्रह्मणो विधीयन्ते । "निर्गुणं निरञ्जनम्", "[6]सत्यं ज्ञानम्", "अविकाराय", "अकायमव्रणम्", "नेह नानाऽस्ति किञ्चन", "निष्कलं निष्क्रियम्", "अगोत्रमवर्णम्" – अगोत्रमिति । अनामकमित्यर्थः । एवमादिभिश्शास्त्रैर्गुणादयः प्रतिषिध्यन्ते । तथा च [7]विधिप्रतिषेधशास्त्रयोर्विरोधादन्यतरबाधोऽवश्यम्भावी । तत्र निषेधस्य प्रसक्तिपूर्वकतया पश्चात्प्रवृत्तं प्रतिषेधशास्त्रमपच्छेदाधिकरणन्यायेन प्रबलम् । अतः प्रतिषेधबलेन गुणादिविधयस्सर्वे बाधिताः । ततश्च अविद्याख्यदोषपरिकल्पिताः गुणविग्रहादयो मिथ्याभूता इति — तदिदमनादरणीयम् । पशुच्छागनयेन उत्सर्गापवादनयेन च विधिनिषेधयोर्भिन्नविषयत्वोपपादनेन तयोर्विरोधगन्धाभावात्, विधीनां प्रतिषेधबाध्यत्वानुपपत्तेः । तदुक्तं वरदाचार्यैस्तत्त्वसारे - "यद् ब्रह्मणो गुणविकारशरीरभेदकर्मादिगोचरविधिप्रतिषेधवाचः । अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः" इति ॥

[8]अथ अन्तर्यामिणमहंग्रहेणानुसंधत्ते – **योऽसावसौ पुरुषस्सोऽहमस्मि** - इति । **असावसौ** - इति वीप्सा आदरार्था । यद्वा अदश्शब्दौ विभज्य यत्तच्छब्दाभ्यामन्वेतव्यौ । कथमिति चेत्, इत्थम् - योऽसौ [9]पुरुषः अहं सोऽसावस्मीति । यद्यपि पुरुषशब्दः, 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि', "योगो योगविदां नेता प्रधानपुरुषेश्वरः" इत्यादिषु जीववाचितया प्रसिद्धः, तथाऽपि, "तेनेदं पूर्णं पुरुषेण सर्वम्", "पूर्वमेवाहमिहासमिति तत् पुरुषस्य पुरुषत्वम्", "महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः" इत्यादिश्रुत्या पूर्णत्वपूर्वसत्त्वादिगुणक[10]स्सर्ववेदपठितपुरुषसूक्तादिप्रसिद्धो महापुरुष एवेह पुरुषशब्देन विवक्षितः ॥

---

**टि०** "पूर्वमेवाहमिहाऽऽसम्" इत्यादिकमत्र द्रष्टव्यम् । **अस्मीत्यपीति** । प्रत्यक्त्वरूपोत्तमपुरुषार्थविशिष्टकर्त्रर्थकलकारस्तदन्तर्यामिपर्यन्तार्थक इत्यर्थः ॥ सन्मात्रं ब्रह्म । तस्येश्वर एकोंशः, जीवोंऽशान्तरमिति यादवप्रकाशमतेऽपि तत्त्वमसि, सोऽहमस्मीत्यत्रानिर्वाहमाह **सन्मात्रस्ये**त्यादिना । त्वमहशब्दयोस्सन्मात्रपरत्वे त्वन्ताऽहन्तारूपश्रुतप्रवृत्तिनिमित्तत्यागप्रसङ्गः । ततस्त्वन्तादिविशिष्टसत्परत्वे तस्य त्वमहमर्थविलक्षणत्वे, तत्पदार्थमुद्दिश्य त्वन्तादिविशिष्टाभेदविधाने च प्रथमपुरुष एव स्यात् । त्वमहमर्थयोरेव वाच्यत्वे तयोरुद्देश्यत्वे च 'तत्' 'सः'

---

**पा०** [1] यत्तद्भ्याम्नयोः - **क.** ।
[2] तौ चेत्यादिस्थाने, 'सर्वातीन्द्रियप्रमाणसिद्धत्वद्योतनार्थौ वे'ति - **ग, घ.** ।
[3] पुरिशयत्वेति नास्ति - **ग, घ.** ।
[4] असिशब्दो निर्वाह्यः - **ग, घ.** ।
[5] ब्रह्मणोऽपि - **ख.** ।
[6] सत्यं ज्ञानमिति न - **ख.** ।
[7] विधिप्रतिषेधयोः - **ख.** ।
[8] अथ तथान्तर्या - **क.** ।
[9] पुरुषः प्रसिद्धः अहम् - **क.** ।
[10] गुणकस्सर्व ।

भा० स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिः । लोके[1] हि अहं त्वमस्मि, त्वमहमसीत्याद्युपचार[2]प्रयोगेषूद्देश्यानुसारेण मध्यमोत्तमयोर्व्यवस्था । [3]तद्वदत्रापि, "त्वं वा अहमस्मि भगवो देवते" इत्यादिषु युष्मदस्मदोस्सहप्रयोगेऽपि व्यवस्थोपपद्यते । उद्देश्यविषययोरेवात्र युष्मदस्मच्छब्दयोरुपपदत्वेन [4]सूत्रकृदभिप्रेतत्वात् । भाष्ये तु तत्त्वमसिनिरूपणावसरे, "नात्र किञ्चिदुद्दिश्य किमपि विधीयते" इत्युक्तिरप्राप्तांशनिषेधाभिप्राया व्यक्ता, [5]उपसंहारस्योपपादनात् ॥

ये पुनस्तत्त्वमसि, सोऽहमस्मीत्यादिषु कार्यकारणोपाध्याकारविधूननेन निर्विशेषस्वरूपैक्यमात्रं[6] वाक्यवेद्यमाहुः, तेषामस्मिन्नस्मिन्नपि खण्डकः । श्रोतर्यनुसन्धातरि च

प्र० [7]नन्वेवं "योऽसौ पुरुषस्सोऽसावहमस्मी"ति कथं सामानाधिकरण्यम्, अहंपदार्थस्य जीवात्मनः परमपुरुषाद्भिन्नत्वादिति चेन्न - अहंशब्देनापि अस्मदर्थान्तर्यामिण एवाभिधानेन अहं स इति निर्देशस्य सुसङ्गतत्वात् ॥

ननु च अहंशब्दस्य प्रत्यगर्थान्तर्यामिपरत्वे सोऽस्मीत्युत्तमपुरुषो न घटते । न हि मदन्तर्यामी परमपुरुषोऽस्मीत्यन्वयो युज्यत इति चेत्-उच्यते । मदन्तर्यामीत्यादिशब्दान्तरेणोपस्थापिते प्रत्यगर्थान्तर्यामिणि उत्तमपुरुषान्वयासम्भवेऽपि अहमित्यस्मत्पदोपस्थापिते तस्मिन्नुत्तमपुरुषान्वयो युज्यत एव । [8]तथा हि पाणिनिसूत्रम्, "अस्मद्युत्तमः" इति । प्रत्यगर्थबोधकास्मच्छब्द[9] उपपदे उत्तमपुरुषो भवतीत्यर्थः । न पुनरस्मच्छब्दस्य प्रत्यगर्थद्वारा परमात्मपर्यन्ततायामुत्तमनिवृत्तिरिति । 'अधिकं तु प्रविष्टम्; [10]न तद्धानिः' इति न्यायात् । एवं तत्त्वमसीत्यादिष्वपि असीति मध्यमपुरुषो निर्वाह्यः; त्वम्पदेन अभिमुखचेतनद्वारैव तदन्तर्यामिणोऽभिधानाभ्युपगमात् । तत्रापि, "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" इत्येतावदेव हि स्मर्यते; न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिरपि[11] ॥

ये तु "तत्त्वमसि" "सोऽहमस्मि" इत्यादौ (त्यादिषु) अहंत्वमादिशब्द(दैः) युष्मदस्मदर्थपरित्यागेन निर्विशेषचिन्मात्रस्वरूपैक्यमेव वाक्यवेद्यमाहुः, तानेव, तत्त्वमसीत्यादिवाक्येषु असिभिः, सोऽहमस्मीति वाक्यस्थास्मिभिरपि खण्डयन्ति । श्रोतर्यनुसंधातरि च युष्मदस्मदी(ते)हि तैः परित्यक्ते । न हि तेषामसिना कश्चित् प्रतिबोधनीयोऽस्ति; न च कश्चित् अस्मिना विशिष्यानुसंधेयः । ननु प्रकृते युष्मदस्मदर्थयोरविवक्षायामपि तयोर्व्युत्पन्नयुष्मदस्मच्छब्दोपपदमात्रोपजीवनेन अस्मत्पक्षेऽपि [12]क्वचिन्मध्यमोत्तमयोरुपपत्तिरिति चेन्न — ततोऽप्यपरित्यक्तप्रवृत्तिनिमित्तकस्य अस्माकं निर्वहणस्यैवानुसर्तुमुचितत्वात् ॥

टि० इति तत्पदार्थः कः? किं सदंशभूतेश्वरः, सदेव वा? आद्ये त्वमर्थादिरूपांशे ईश्वरांशाभेदो बाधितः । न हि मृत्पिण्डांशभूतमणिकाभेदो मृत्पिण्डांशभूतघटशरावयोः । अन्त्ये त्वमर्थादौ सत्ताया नित्यप्रतिपन्नतया शुद्धसदभेदो न बोधनीय इति निर्गलितार्थः । उद्देश्ययोरिति ।तेन दृश्यस्त्वमर्थादिरदृश्येश्वराभिन्नः कथमिति ज्ञाप्यते; अदृश्यसन्मात्रब्रह्मणस्त्वमहंशब्दार्थत्वायोगश्च । (उद्देश्ययोरिति पाठस्स्यात्? तेन पूर्वं त्वमहमर्थयोर्विधेयत्वपक्षः इह

पा० [1] लोके तु - ग, घ. ।
[2] उपचारेषु ग, घ. ।
[3] 'तद्वदत्रापि व्यवस्थोपपद्यते' इत्येतावदेवास्ति - ग, घ. ।
[4] सूत्रपदाभि - ग, घ. ।
[5] भिप्राया उक्तोपसंहार - क. ।
[6] स्वरूपैक्यं - ग, घ. ।
[7] ननु योऽसौ - क, ख.
[8] तथा च - क. ।
[9] अस्मच्छब्द उपपद इत्येव आन्ध्रलिपिकोशे शुद्धिपत्रे । पा० अस्मच्छब्दोपपदे ।
[10] न तु - ख. ।
[11] निवृत्तिरिति - क. ।
[12] त्वमहमिति - क. ।

**भा०** [1]**युष्मदस्मदी हि परित्यक्ते । न ह्यस्तिमा** [2]**कश्चित्प्रतिबोधनीयः ; न च कश्चिद्स्मिन् विशिष्यानुसन्धेयः । विधूननीयोपाधिविषयव्युत्पत्तिमच्छब्दसन्निधिमात्रोपजीवनेन** [3]**कथंचित् मध्यमोत्तमसंपत्तिरिति चेत् - ततः वरमपरित्यक्तप्रवृत्तिनिमित्तमास्माकं**[4] **निर्वहणमनुस्मर्तुम् ॥**

**सन्मात्रस्यांशिनः अंशद्वयविशिष्टताप्रतिपादनं वदतामपि सन्मात्रविवक्षयामत्र ( ताव-न्मात्रापेक्षयात्र**[5] **) वाक्ये त्वमहम्भावायोगात् , त्वंताहंताविशिष्टं सदिति** [6]**विशिष्टविवक्षाया-मपि प्रथमपुरुषोपनिपातप्रसङ्गात् , इदयोश्च (** [7]**अत्रत्ययोश्च ) युष्मदस्मदर्थयोर्मृत्पिण्डांशे मणिक इव घटशरावाकारयोः , मदंशभूतेश्वराकारेऽपि समन्वयायोगात् , त्वमहमर्थयोः सत्ताद्याकारस्य नित्यप्रतिपन्नतया विशेषतो( ऽनिर्देश्य )** [8]**ऽनुपदेश्यत्वादननुसन्धेयत्वाच्च न कथंचिदपि " तत्त्वमसि " " सोहमस्मि " इत्यादेर्निर्वाहः शक्यः ॥**

**प्र०** अपरे त्वाहुः " योसावसौ पुरुषस्सोहमस्मि " इत्यत्र पुरुषशब्देन परमपुरुषो न विवक्षणीयः ; तथा सति अस्मोत्युत्तमस्य , पुरुष इत्याख्यायाः , सोऽहमिति [10]सामानाधिकरण्यस्य च क्लेशेन निर्वाह्यत्वात् । ततो वरमत्र पुरुषशब्दस्य परिशुद्धजीवात्मपरत्वमाश्रयितुम् । एवं च सति यः पुरुषो मुक्तदशाभाव्याकारः परि-शुद्धजीवात्मा सोऽहमस्मीत्यन्वयादुत्तमस्य , पुरुष इत्याख्यायाः सामानाधिकरण्यस्य चातिस्वरसो निर्वाह इति । नायं प्रश्नस्साधुः । तथा भवत्वेवमिह निर्वहणम् । तथाऽपि " तत्त्वमसि " इत्यत्र तत्पदस्य , " त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि " इत्यादिषु त्वंपदस्य च परदेवतावाचकत्वेन त्वदुक्तनिर्वाहस्य तत्राभावात् अकामेनापि तत्रास्मदुक्तनिर्वाहस्य समाश्रयणे तत्समानन्यायतया अत्रापि तस्यैवानुसरणमुचितत्वादिति ॥

स्यादेतत् - " त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि " इत्यत्र कथं पुरुषव्यवस्था । त्वमहं पदयोरुभयोरपि श्रवणात् । उद्देश्यविषयकमेव युष्मदादिपदमुपपदत्वेन पाणिनिसूत्राभिमतम् । तथा चोद्देश्य-समर्पकोपपदवशादेवात्र मध्यमोत्तमयोर्व्यवस्था सिध्यतीति चेत — अस्त्वेवमिह समाधानम् । तथापि " तत्त्वमसि " इत्यत्र पुरुषव्यवस्था न घटते । तत्र त्वंपदयोगवत् तत्पदयोगस्यापि सत्त्वात् । तथा चासीति वदस्तीति प्रथमपुरुषस्यापि प्रसङ्गः । न ह्यत्रापि त्वंपदमुद्देश्यसमर्पकम् ; येन त्वंपदमेव पुरुषनिमित्तम् , [11]न तु तत्पदमपीति व्यवस्था स्यात् । तथा च तत्त्वमसिनिरूपणावसरे भाष्यम् , " नात्र किञ्चिदुद्दिश्य किमपि विधीयते " इति । तस्मात् " तत्त्वमसि " इतिवत् तत्त्वमस्तीति [12]प्रसङ्गो दुर्निवार इति । अत्रोच्यते — तत्त्वमसीत्यत्रापि त्वंपदार्थ उद्देश्य एव । ततश्चोद्देश्यविषयकयुष्मत्पदवशात् तत्र मध्यम एवेति न प्रथमपुरुष प्रसङ्गः । नन्वेवं भाष्यविरोध इति चेन्न । भाष्यस्य विधेयांशमात्रनिषेधपरतयोद्देश्यांशनिषेधकत्वाभावात् ।

**टि०** वाक्ये चोद्देश्यत्वपक्ष इति दर्शितं भवेत ) । ननु तत्त्वमस्यर्थः उच्यते : असि , अस्मीति सन्मात्रम । तथा च त्वमर्थोऽहमर्थश्च ईश्वराभिन्नसन्मात्राभिन्न इति वाक्यार्थः । तेन एकसन्मात्रांशत्वं जीवेश्वरयोरुक्तं भवतीति चेत् न , धातुना सत्ताक्रियायाः लकारेणाभिमुखत्वप्रत्यक्त्वविशिष्टतदाश्रयस्य च बोधनेन ईश्वराभिन्नसन्मात्रप्रतीत्ययोगात् ।

पा० [1] ' युष्मदथऽस्मदेथ च परित्यक्ते ' इति क. पाठः । तदा श्रोतरीत्यास्य अनुसंधेय इत्यन्तमेकं वाक्यम् । परित्यक्त इति न सति सतस्यन्तमिति भाव्यम् ।
[2] कश्चिदर्थः - क. ।
[3] कचित् - ग, घ. ।
[4] अस्माकं - ग, घ. ।
[5] क. । [6] विशिष्टेति न - क. ।
[7] क. ।
[8] क. ।
[9] अपर आह - क. ।
[10] इति च सामानाधिकरण्यस्य - ख ।
[11] न तत्पद - ख. ।
[12] प्रयोगोपि - ख. ।

**वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् ।**
**ओं क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर ॥ १७ ॥**

**भा०** दृष्टिविधिस्तु मोक्षार्थविद्यासु[1] वेदान्तवादिना नाङ्गीक्रियते । यद्यप्यत्र 'त्वं राजाऽसि, अहं राजाऽस्मि' इत्यादिवत् तादर्थ्याद्युपचारविवक्षया ([2]क्षार्या) मध्यमोत्तमयोः सामञ्जस्यम्, तथाऽपि लोकवेदयोः चेतनपर्यन्तदेवमनुष्यादिव्यवहारन्यायेन जातिगुणशब्दवन्निलाभादुपेक्षा ॥

नन्वेवं पुरुषाख्यचेतनात्मसामानाधिकरण्यक्लेशं परित्यज्य 'योऽसावसौ पुरुषः सोऽहमस्मि' इति '[3]परिशुद्धात्मस्वरूपानुसन्धानपरमिदं वाक्यमस्तु । मैवम् । "तत्त्वमसि." "त्वं वा अहमस्मि." इत्यादिषु तदनुपपत्तेरत्रापि तत्समानन्यायतया तथैव अनुसन्धानस्यौचित्यात् । ब्रह्मात्मकोऽहमस्मि इति परविद्याङ्गभूतस्यात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादर्थ्यादिकं लक्षणीयं स्यात् ॥ १६ ॥

अनन्तरं तु परिशुद्धात्मस्वरूपमुच्यते - **वायुरनिलममृतम्** इति । विद्याकर्मानुसारेण तत्र तत्र गन्तृत्वाद्वायुः । निलयनरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्च अनिलम् । अमृतं — म्रियमाणेऽपि देहसन्ताने स्वयममृतम् । इदं विजरादीनामप्युपलक्षणम् । परि-

**प्र०** तथा हि – न ह्येवं भाष्याभिप्रायः, नात्र किञ्चिदुद्दिश्यते; न च किञ्चिद्विधीयत[4] इति । अपि तर्ह्येवं भाष्याभिप्रायः, 'त्वपदेन किञ्चिदुद्दिश्यत एव; किन्तूद्दिष्टे[5] तत्र न किञ्चिदपि विधीयत' इति । कथमिदमवगम्यत इति चेत् - प्राप्तस्यैवोपसंहारकत्वोपपादकभाष्येणैव विधेयांश एव निषिध्यते इत्यभिप्रायस्य व्यक्तत्वात् ॥ अन्योऽप्याह — त्वं राजाऽसि, अहं राजाऽस्मीत्यादिवत् [6]तादर्थ्याद्युपचारविवक्षया 'तत्त्वमसि' 'सोऽहमस्मि' इत्यादिषु मध्यमोत्तमसामानाधिकरण्यानां सामञ्जस्यमिति – तदप्युपेक्षणीयमेव । लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादिव्यवहारबलेन जातिगुणशब्दवत् मुख्यवृत्त्यैव निर्वाहसम्भवे उपचारकल्पनस्यान्याय्यत्वादित्यलं विस्तरेण ॥ १६ ॥

एवं [7]परावरतत्त्वविवेकम्, परमनिःश्रेयससाधनभूतसाङ्गभक्तियोगम्, तन्निष्ठस्यानुसन्धेयमन्त्रद्वयञ्चोपदिश्य इदानीं भक्तियोगे ज्ञानशक्त्यादिशून्यतया शरणागतिमवलम्बमानानां तदनुष्ठानमन्त्रावुपदिशति ।

**टि०** 'तद्योऽसौ सोऽहम्, योऽहं सोऽसौ' इत्यत्रैव तच्छब्दार्थत्वमात्रार्थभेदस्यैवात्र वाच्यतया तकारार्थभेदेदम्पर्यायोगाच्च । तत्त्वमस्पदानां तत्तदंशमात्रपरतयैव प्रसिद्धया मिथोऽभेदायोगाच्च । अंशिपरत्वे च लक्षणा । असेरस्मेश्चानिर्वाहोऽपि इत्याशयेन **न कथञ्चिदपीत्युक्तम्** । अथ तत्पदार्थेश्वरे त्वमहमर्थभूतजीवरूपांशविशिष्टाभेद उच्यत इति चेत् - इदमीश्वरे जीववैशिष्ट्यमस्मदिष्टरूपं चेत् - अस्मन्मतप्रवेशः । अतः प्रथमपुरुषोपनिपातोऽस्मदीत्येव वारणीयः । अन्यादृशस्य तु विशिष्टस्य न त्वमहंशब्दार्थतेति ॥

१७. मं. टि० **सोऽहमस्मीति** स्वानुसंहितात्मस्वरूपविवेचनपूर्वकमन्तिमप्रत्ययान्तप्रार्थना क्रियते मन्त्रद्वयेन ।

**पा०** [1] विद्यास्वरूपपरवेदान्तवादिभिः - क. ।
[2] क. ।
[3] परिशुद्धस्वरूपमात्रानुसन्धान - ग, घ. ।
[4] इत्यपि । तर्ह्येवमिति ग्रन्थाक्षरकोशे । सर्वमेकवाक्यतया चान्ध्रादिकोशे ।
[5] उद्दिष्टे न किञ्चिद्विधीयते - ख. ।
[6] तादर्थ्याद्युपचार - ख. ।
[7] परापरतत्त्वविवेकपरम - ख. ।

**भा० शुद्धजीवविषये प्रजापतिवाक्येऽपि[1] "विजरो विमृत्युर्विशोकः" इत्यादिसहपाठात् ॥**

**अत्र "वायुश्चान्तरिक्षं चैतदमृतम्" इत्यादिपरामर्शाद्वाय्वादिशब्दानां भूतद्वितीयविषयत्वं [2]नाऽऽशङ्कनीयम्, पूर्वापरास्थामस्त्रङ्गतेः । यद्यप्यमीषां परमात्मविषयत्वं विशिष्टवृत्त्या योजितां वा युज्यते, तथाऽपि वर्गमिह नश्वरस्य देहस्य अनन्तरं वचनात्सद्यावृत्तप्रत्यगात्मपरत्वम् । [3]प्राणवायुविषयत्वेऽप्यत्र मन्दं प्रयोजनम् । श्वेताश्वतरीयाश्च भोग्यभोक्तृनियन्तॄणां विवेचने भोक्तृशब्दविवक्षितं[4] प्रत्यगात्मानममृतशब्देनाऽऽमनन्ति "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" इति, "क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः" इति च ॥**

प्र० यद्यप्यागमान्ताचार्यैः[*] इमौ शरणागतिमन्त्राविति रहस्यत्वात् कण्ठरवेण नाभिहितौ - तथाऽपि प्राज्ञानामर्थसामर्थ्यात् यथा तत्तत्त्वावगमस्सुशकः, तथा तयोः श्लोकयोरर्थवर्णनं कृतम् । अत्रापि चेत्यमन्ते

"व्यक्ताव्यक्ते वाजिनां संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादात् ।
वैश्वामित्रो विश्वमित्रं व्यतानीत् विद्वच्छात्रप्रीतये वेङ्कटेशः ॥" इति ।

अत्र **विद्वच्छात्रप्रीतये** इत्यनेन स्वप्रबन्धस्य निगूढाभिप्रायकत्वं[5] व्यञ्जितम् । एवमाचार्याभिप्रायविषयत्वाच्छरणागतिपरतया मन्त्रद्वयं व्याख्यास्यते । तत्र **वायुरनिलम्** इति प्रथमश्लोकः **पूर्वखण्ड**समानार्थकः । अग्ने नयेत्यादि[6] चरमश्लोक उत्तरखण्डसमानार्थकः । तथा च "प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायं फलं [7]प्राप्तेस्तथा प्राप्तिविरोधि च" इत्येवमाद्याः **पूर्वोत्तरखण्ड**योः विशोधिता ये पदार्थाः, ये च वाक्यार्थभेदाः, ते सर्वेपीह पूर्वोत्तरयोः श्लोकयोरनुसन्धेयाः ॥ "[8]सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् । एतत् ज्ञानञ्च योगश्च शेषोऽन्यो ग्रन्थविस्तरः" इत्यादिशास्त्रैः, प्रोक्षणादिभिः समिदादिकमिव, परिशुद्धस्वरूपयाथात्म्यज्ञानेन संस्कृत्यैव आत्महविः समर्पणीयमित्युक्तत्वात् इहापि शरीरेन्द्रियादिभ्यो [9]विविक्तं स्वात्मानं-प्रथमं विशोध्य ब्रह्मणि समर्प्य स्वाधिकारानुगुणमर्थ्यते **वायुः ... कृतं स्मर** ।

"भोक्ता भोग्यं प्रेरितारञ्च मत्वा" इत्यादिश्रुत्यन्तरप्रसिद्धचिदचिदीश्वरतत्त्वक्रम इहापि द्रष्टव्यः । **वायुः** विद्याकर्मानुगुणभगवत्सङ्कल्पवशेन तत्तत्र गन्तृत्वाद्वायुः । अनेन जीवस्य अणुपरिमाणत्वं परमात्माधीनत्वञ्च सिध्यति । वा गतिगन्धनयोः इति धातुः । निलयनरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्च **अनिलम्** । **अमृतम्** - म्रियमाणेऽपि देहसन्ताने स्वयममृतम्, स्वरूपतो धर्मतश्चाविनाशीत्यर्थः । "अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा", "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" – न विद्यते उच्छित्तिः विनाशो यस्य सोऽनुच्छित्तिः नित्य इत्यर्थः । अनुच्छित्तिः धर्मो यस्यासावनुच्छित्तिधर्मेति पुनर्बहुव्रीहिः । नित्यज्ञानवानिति भावः । आहुश्च **यामुनाचार्याः** — "तदेवं चित्स्वभावस्य पुंसः स्वाभाविकी स्थितिः । (नानाप)तत्तत्पदार्थसंसर्गात्तद्विस्तित्वमश्नुते" इति । इदममृतत्वमपहतपाप्मत्वादीनामप्युपलक्षणम् । परिशुद्धजीवविषये प्रजापतिवाक्ये, "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति पाठात् **अनिलममृतम्** इति पदद्वयमपि पुंलिङ्गत्वेन विपरिणेयम्, वायुरिति पुंलिङ्गत्वेनोपक्रमात् ॥

पा० [1] प्रजापतिवाक्ये विजरो - ग, घ. ।
[2] न शङ्कनीयम् - ग, घ. ।
[3] प्राणविषयत्वे - ग, घ. ।
[4] विवक्षितप्रत्यगात्मानम् - ग, घ. ।
[*] अत्र क. पाठः । आगमे आचार्यैः - ख. । आकरे आचार्यः (?) ।
[5] प्राप्यत्वम् - ख. । [6] चापरश्लोक ।
[7] चन्द्रेति ग्रन्थान्तरे पाठः ।
[8] सर्वोपाय - ख. ।
[9] अतिरिक्तम् - क. ।

**भा०**　एवं प्रत्यगात्मस्वरूपस्य " न जायते म्रियते वा विपश्चित् " इत्यादिप्रसिद्धममृतत्वमभिधाय [1]क्षेत्रज्ञशरीरस्य [2]मृतिमत्त्वमवश्यम्भावीत्याह – **अथेदं भस्मान्तं शरीरम्** इति । प्रकृतादर्थादर्थान्तरविवक्षयाऽत्र अथशब्दः ; आत्मोत्क्रमणानन्तर्यार्थो वा ; कर्मवश्यकार्त्स्न्यपरो वा । तथा च स्मर्यते , " गङ्गायां सिकता धारा यथा वर्षति वासवे । शक्या गणयितुं लोके न व्यतीताः पितामहाः " इति , " ब्रह्मादिषु प्रलीनेषु " इत्यादि च । इदमिति विशेषणं [3]नित्यत्वेन प्रमाणसिद्धानां नित्यमुक्तेश्वरशरीराणां व्यवच्छेदार्थम् । भस्मान्तम् इति

**प्र०**　अत्र , " वायुश्चान्तरिक्षश्च एतदमृतम् " इत्यादिकं परामृश्य वाय्वादिशब्दानां भूतद्वितीयविषयकत्वं नाऽऽशङ्कनीयम् ; पूर्वापराभ्यामसङ्गतेः । नापि विशिष्टवृत्त्या [4]योगतो वा परमात्मविषयत्वमाशङ्कनीयम् । नश्वरस्य देहस्य अनन्तरवचनेन तद्व्यावृत्तप्रत्यगात्मपरत्वस्यैव न्याय्यत्वात् । " क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः " – स्वभोग्यतया प्रधानं हरतीति हरः । जीव इत्यर्थः – " क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः " इति श्वेताश्वतरीये (तत्रऽपि) भोग्यभोक्तृनियन्तृणां विवेचने अमृतशब्देन प्रत्यगात्मनोऽभिधानदर्शनाच्च अत्राप्यमृतशब्दो जीवात्मपर इत्येव युक्तम् ॥

एवं प्रत्यगात्मस्वरूपस्य " न जायते म्रियते वा विपश्चित् " इत्यादिप्रसिद्धममृतत्वमभिधाय क्षेत्रस्य (ज्ञ) शरीरस्य मृतत्वमवश्यम्भावीत्याह — **अथेदं भस्मान्तं शरीरम्** इति । प्रकृतादर्थादर्थान्तरविवक्षया अत्र **अथशब्दः** ; जीवात्मोत्क्रमणानन्तर्यार्थको वा । यद्वा [5]कार्त्स्न्यपरः । " मङ्गलानन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथ " इति नैघण्टुकाः । [6]**इदं** शरीरमिति विशेषणमीश्वरादिशरीरत्वेन नित्यत्वेन च प्रमाणसिद्धानां व्यवच्छेदार्थम् । तथा च कृत्स्नं कर्मवश्यशरीरं भस्मान्तमित्यर्थः । स्मर्यते च " ब्रह्मादिषु प्रलीनेषु नष्टे स्थावरजङ्गमे । एकस्तिष्ठति विश्वात्मा स तु नारायणोऽव्ययः. " इति । भस्मशब्दो [7]दाहाख्यसंस्कारपरस्सन् खननादेरप्युपलक्षकः । अथवा " कळेबरं विट्क्रिमिभस्मसंज्ञितम् " इत्यन्यत्र प्रसिद्धक्रिम्यन्तत्वादेरप्यु (रु) पलक्षको **भस्मान्तशब्दः** । त्यागे कृते क्रव्यादभक्षितं शरीरं विट्संज्ञितं भवति ; खनने क्रिमिसंज्ञितम् ; दाहे भस्मसंज्ञितमिति भावः ॥

ननु केषुचिच्छरीरेषु [8]प्रत्यक्षत एव विनाशो दृष्टः । अविनष्टेष्वप्य (ष्व) न्येषु अनुमानाद्विनाशित्वं

**टि०**　**आत्मोत्क्रमणे**ति । **वायुरनिलममृत**मिति मरणकालेऽमृतस्य निलयनहान्या गमनसूचनादथशब्दादात्मोत्क्रमणानन्तर्यलाभः । एवं भस्मान्तपदबलाच्च तल्लाभः । तत्काल एव विशरितुमारब्धं क्षणान्तरे च विशीर्यत इति शरीरपदेन प्रदर्श्य तदपि दुर्विकृतं न रक्षणार्हमिति भस्मान्तपदेन ज्ञाप्यते ॥

**गङ्गाया**मिति । यथा गङ्गायां सिकताः वर्षति वासवे धाराश्च लोके गणयितुं न शक्याः, तथा व्यतीताः पितामहा अपीत्यर्थः । **यथे**तिस्थाने तथेति पाठः स्याच्चेत् - धारासिकतागणनमपि शक्यम् , न तु

**पा०** [1] क्षेत्रस्य शरीरस्य - **क.** ।
[2] मृतत्व - **ग, घ.** ।
[3] विशेषणमीश्वरशरीरत्वेन नित्यत्वेन च प्रमाणसिद्धानाम् - **ग, घ.** ।
[4] योगतो वेत्यस्य स्थाने ' वायुगत ' इति मुद्रितकोशे ।
[5] कार्त्स्न्यपर इत्येतदनन्तरं स्मर्यते इत्यादिकमेव मुद्रिते । मङ्गलेत्यादि सर्वं नास्ति ।
[6] इदमिति शरीरविशेषणमिति स्यात् ?
[7] संस्कारपरः । स खननादेरिति मुद्रिते ।
[8] तात्पर्यचन्द्रिकानुसारेण प्रत्यक्षत ( २. १८ ) इति पाठो निवेशितः । उपलभ्यमानपाठस्तु प्रत्यक्ष एवेत्येकः, प्रत्यक्षित एवेत्यन्यः - **क.**

भा० संस्कारमात्रव्यञ्जकम्; [1]कीटान्तत्वादेरप्यन्यत्र प्रसिद्धस्योपलक्षणं वा । [2]शरीरशब्देन व्युत्पत्तिनिमित्तानुसारेण[3] विशरणस्वभावत्वं गम्यते ॥

एवं "भोक्ता भोग्यं प्रेरितारं च मत्वा" इति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितारं प्रकृतं महापुरुषं प्रणवेनोपादत्ते ओम् इति । यथा आमनन्त्याथर्वणाः, "यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति । उक्तं च योगानुशासने, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" "स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" "तस्य वाचकः प्रणवः" इति । आह च सर्वज्ञः, "ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्" इति । स्वयं चागायत् "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्" इति । एवं सर्वत्र द्रष्टव्यम् ॥

अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञगोचरमभिमुखीकुर्वंस्तदनुग्रहं याचते - क्रतो स्मर कृतं स्मर इति । क्रतो - क्रत्वात्मक । यथाऽऽह "अहं क्रतुरहं यज्ञः" इति ।

प्र० मुनिश्चितम् । अन्यथा श[त्रू]न् प्रति शस्त्रादिकं न प्रयुञ्जीत । स्वयमपि शत्रुप्रयुक्तशस्त्रशरादिकं न निवारयेत् । एवं संप्रतिपन्नस्य भस्मान्ततादेरिहोपदेशे किं प्रयोजनमिति चेत् – उच्यते – आत्मशरीरयोरमृतत्वमृतत्वरूप-विरुद्धधर्मप्रदर्शनेन भेदसमर्थनं तावदेकं प्रयोजनम् । अपथ्यपरिहाररसायनसेवादिभिः किं [4]नित्यत्वमपि संभवेदिति सन्देहव्याकरणं द्वितीयम् । स्वदेहेऽपि वैराग्यजननं तृतीयम् । विनाशहेतौ सति अवश्यं नश्यतीतिवत् भगवदुपासनादिभिरत्यन्तविनाशस्यापि संभावनाद्योतनं चतुर्थम् । शीघ्रं मोक्षोपाये प्रवर्तितव्यमिति त्वराजननं पञ्चमम् । एवमुक्तान्यनुक्तानि च प्रयोजनान्तराणि द्वितीयाध्याय (१८) तात्पर्यचन्द्रिकायां द्रष्टव्यानि ॥

एवं "भोक्ता भोग्यं प्रेरितारञ्च मत्वा" इति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितारं प्रकृत महापुरुषं प्रणवेनोपादत्ते ओम् इति । यथाऽऽमनन्त्याथर्वणाः, "यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परमपुरुष-मभिध्यायीत" इति । उक्तं च योगानुशासने, "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः । स पूर्वेषामपि गुरुः कालेनानवच्छेदात् । तस्य वाचकः प्रणवः" इति । आह च सर्वज्ञः — "ओमित्येवं (च) सदा विप्राः पठध्वं ध्यात केशवम्" इति । स्वयञ्चागायत् "ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्" इति । एवं सर्वत्र द्रष्टव्यम् ॥

अथवा शरीरमात्मानं च विविच्य विविक्तमात्मानमकारवाच्ये परमपुरुषे समर्पयति ओमिति । प्रणवस्य आत्मसमर्पणपरत्वं "ओमित्यात्मानं युञ्जीत", "प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इत्यादिषु प्रसिद्धम् ॥

अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञगोचरमभिमुखीकुर्वन् तदनुग्रहं याचते क्रतो स्मर । क्रतो ज्योतिष्टोमादिक्रिया (क्रत्वा) त्मक । यथाऽऽह "अहं क्रतुरहं यज्ञः" इति । यज्ञः पञ्च महायज्ञा इत्यर्थः ।

टि० पितामहगणनमित्यर्थः स्यात् । संस्कारेति । दाहखननादि सर्वसंस्कारेत्यर्थः । असंस्कृत-पशुमृगपक्षिमनुष्यादिशरीराणामप्यसंकोचेन ग्रहणायान्यथाऽऽह' कीटेति । प्रेरितारमिति । ईर क्षेपे । आधृषीयत्वात् णिचो विभाषा ॥

पा० [1] कीटान्तत्वादेरन्यत्र - ग, घ. ।
[2] शरीरशब्दे - ग, घ. ।
[3] सारे - ग, घ. ।
[4] नित्यत्वं संभवेत् - ख. ।

भा० "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत", "एवं-क्रतुर्ह" [1]इत्यादिष्विवात्रापि प्रकरणादेव क्रतुशब्द उपासनपरो वा। तद्गोचरे तु भगवति तच्छब्द उपचारात्। स्मर - सानुग्रहया [2]बुद्ध्याऽस्मान् विषयीकुरु। "स्नेहपूर्णेन मनसा [3]किं न स्मरसि केशव" इतिवत्। उक्तं च भगवता "स्थिते मनसि" इत्यारभ्य, "ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्। अहं स्मरामि मद्भक्तं नयामि परमां गतिम्" इति। सर्वदा सर्वं साक्षात्कुर्वतः स्मर्तृत्ववचनमिह पूर्वकृतप्रत्यवेक्षणाभिप्रायम्। कृतं स्मरेत्यत्रापि तथैव विवक्षा। मत्कृतं यत्किञ्चिदनुकूलमनुसन्धाय कृतज्ञस्त्वं मां रक्षेति भावः। [4]एतावदन्तं त्वत्कृतमानुकूल्यं प्रतिसन्धाय त्वमेव शेषपूरणं कुर्विति वा। स्मरन्ति हि "जायमानं हि पुरुषम्" इत्यादि([5]दीनि)। स्वयमप्याह "तेषां सततयुक्तानाम्" इत्यादि। क्रतो स्मर कृतं स्मर इत्यावृत्तिरुक्तार्थे त्वरातिशयात् (शयं [6]द्योतयति) ॥ १७ ॥

प्र० अथवा - क्रतो! भक्तिस्वरूप! "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत", "एवंक्रतुर्ह" इत्यादिषु क्रतुशब्दस्य भक्तियोगेऽपि प्रयोगदर्शनात्। "भक्तियोगगोचरे भगवति तच्छब्द उपचारात्" इत्याचार्याः। रक्षकस्य भक्तियोगस्थाने निवेशनं क्रतो इति संबोधनेन विवक्षितमिति भावः। स्मर सानुग्रहया बुद्ध्या विषयीकुरु। "स्नेहपूर्णेन मनसा [7]किं न स्मरसि केशव" इतिवत्। उक्तं च भगवता "स्थिते मनसि" इत्यारभ्य, "ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्। अहं स्मरामि मद्भक्तं नयामि परमां गतिम्" इति। अत्र 'स्मरामि' 'नयामि' इति पदद्वयस्य, 'क्रतो स्मर' 'अग्ने नय' इति प्रार्थनाद्वयापेक्षया प्रतिवचनत्वावगमद्वारा (मात्) वराहचरमश्लोकद्वयं वायुरनिलममृतमित्यादिमन्त्रद्वयोपबृंहणमिति भावः। कृतं स्मर मत्कृतं यत्किञ्चिदानुकूल्यमनुसंधाय कृतज्ञस्त्वं मां रक्षेति वा। एतावदन्तं त्वत्कृतमानुकूल्यं प्रतिसंधाय त्वमेव शेषपूरणं कुर्विति वा भावः। स्मरन्ति हि, "जायमानं हि पुरुषम्" इत्यादि। [8][स्वयमप्याह!] हि, "तेषां सततयुक्तानाम्" इत्यादि। उक्तार्थे त्वरातिशयात् क्रतो स्मर कृतं स्मर इत्यावृत्तिः ॥ १७ ॥

पा० [1] इत्यादेः प्रकरणाच्च - क.।
[2] बुद्ध्या विषयीकुरु - ग, घ.।
[3] कृ. भा. टिप्पणं द्रष्टव्यम्।
[4] एवमेवान्ध्रलिपिमुद्रणेऽपि दृश्यते; 'एतावन्तम्' - ग.।
[5] क.। [6] क.।

[7] किन्नेति स्थाने लिखितकोशेऽन्यथाऽस्ति। तत 'यन्न' इति वा 'पन्न' इति वेति संदिग्धम्। आचार्यभाष्ये, यन्नेति मुद्रयित्वा किन्नेति शोधितं - कृ. कोशे। तत्रापि यन्नेति पाठः कदाचित् मूलं स्यात्। 'यन्नः' इति श्रीवेङ्कटेश्वरप्राच्यकोशागारकृते मुद्रणे दृश्यते। वचनमिदं कुत्रत्यमिति च मृग्यम् ॥

[8] मुद्रितकोशे 'पुरुषमित्यादि' इत्येतदनन्तरम् 'उक्तार्थे' इति वाक्यमेवास्ति। लिखितकोशे 'ही' त्यादिकं मध्येऽस्ति। तत्र आचार्यभाष्यानुसारेण स्वयमप्याहेति पूरितम् ॥

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १८ ॥

भा० पुनरप्यग्निशब्दवाच्यं [1]भगवन्तं प्रति, स्वापेक्षितं प्रापयेत्याह अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम इति ॥ अग्ने – अग्निशरीरक । "यस्याग्निः शरीरम्" इत्यन्तर्यामिब्राह्मणम् । "साक्षादप्यविरोधं जैमिनिः" इति न्यायादग्रनयनादिगुणयुक्तेति वा । [2]नय – प्रवर्तयेत्यर्थः । सुपथा – शोभनेन मार्गेण । प्रतिषेधस्पर्शरहितेनोपायेनेति यावत् । राये - विद्यार्थशरीरसंरक्षणत्वदर्चनाद्यनुगुणाय धनाय । [3]यद्वा प्रकरणानुगुण्यात्, "अनस्करकरग्राह्यमराजकवशंवदम् । अदायादविभागार्हं धनमार्जय सुस्थिरम् ॥", "अनन्तं बत मे वित्तम् ।" इत्यादिनुक्तमलौकिकं धनमिह विवक्षितम् । एक एव मन्त्रः प्रकरणादिभिः विशेषितस्तत्तदनुगुणमर्थं विवक्षतीति सम्यङ्न्यायविदः । अस्मान् – त्वदनन्यभावान्

प्र० पुनरप्यग्निशब्दवाच्यं भगवन्तं प्रति इष्टप्राप्तिमनिष्टनिवृत्तिञ्च प्रार्थयते – **अग्ने नय........विधेम** ॥

बृहदारण्यके च सप्तमाध्याये (१०-१.) "यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति" इत्यादिना अर्चिरादिकं पन्थानमुपदिश्य पश्चादध्यायावसाने "हिरण्मयेन पात्रेण" इत्याद्या एते चत्वारो मन्त्राः क्रमेण पठिताः । **अग्ने** - अग्निशरीरक । "यस्याग्निश्शरीरम्" इत्यन्तर्यामिब्राह्मणम् । यद्वा "साक्षादप्यविरोधं जैमिनिः" इति न्यायेन अग्रं नयतीत्यग्निः । अग्रनयनादिगुणयुक्त । **नय** - प्रवर्तयेत्यर्थः । **सुपथा** - [4]शोभनेन मार्गेण ; प्रतिषेधस्पर्शरहितेन याजनाध्यापनाद्युपायेनेति यावत् । **राये** - विद्यार्थशरीरसंरक्षण-[5]त्वदर्चनाद्यनुगुणाय धनायेत्यर्थः । अथवा "[6]अतस्करकरग्राह्यमराजक[7]वशंवदम् । अदायादविभागार्हं [8]धनमार्जय सुस्थिरम् ॥", "अनन्तं बत मे वित्तम्" इत्यादिषूक्तमलौकिक[9] धनमिह विवक्षितम् ; विद्याप्रकरणानुगुण्यात् । "एक एव मन्त्रः प्रकरणादिभिर्विशेषितः तत्तदनुगुणमर्थं [10]बोधयतीति सम्यङ्न्यायविदः" इत्याचार्याः । यद्वा - अग्रे **नय** प्रापयेत्यर्थः । **सुपथा** अर्चिरादिपथेन । बृहदारण्यकपाठेऽर्चिरादिपथस्य बुद्धिस्थत्वात् ।

"अर्चिरहस्सितपक्षान्[11] उदगयनाब्दौ च मारुतार्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥" इति ।

पा० [1] भगवन्तम् स्वा - ग, घ. ।
[2] नय गमय प्रापय प्रवर्तय - क. ।
[3] विद्यार्थप्रकरणानुगुण्यात् ग, घ; अत्र यद्वेत्यारम्भौचित्यं प्रागेवाचार्यभाष्यतात्पर्यमुद्रणे उल्लिखितम् । लब्धमिदानीं क - कोशे ।
[4] शोभनमार्गेणेत्यान्ध्रलिपिमुद्रणे ।
[5] त्वदर्चनानुगुणाय - ख. ।
[6] अनस्करग्राह्यमिदम् - ख. ।
[7] अराजाज्ञावशंवदम् - क. ।
[8] धनमादाय - ख. ।
[9] कमिह धनम् - क. ।
[10] 'विवक्षति' इत्याचार्यभाष्ये पाठः ।
[11] उदगयनाब्दमरुदर्केन्दून् - ख. उपरितनपाठस्त्वान्ध्रलिपिमुद्रणे ।

भा० अनन्यगतींश्च । विश्वानि देव वयुनानि विद्वान् । देव - अस्मदपेक्षितप्रदानानुरूपविचित्र-क्रीडादियुक्त[1] । विश्वानि वयुनानि - सर्वाणि ज्ञानानि । "[2]माया वयुनं ज्ञानम्" इति [3]हि नैघण्टुकाः । अतो ज्ञानमुखेनोपायविशेषा इह वयुनशब्देन विवक्षिताः । सर्वान् तत्तदधिकारानुगुणान् चतुर्विधपुरुषार्थोपायान् यथावत् विद्वान् त्वं अविदुषोऽस्मान् नेतुमर्हसि इति भावः ॥

युयोध्यस्मज्जुहुराणम् । बन्धनात्मकतया अचिन्त्यप्रकारकौटिल्यवत्तया वा बाधमानमित्यर्थः । एनः - अकृत्यकरणकृत्याकरणादिरूपं त्वदनुभवादिप्रतिबन्धकम् ।

---

प्र० अभियुक्तसंगृहीतेन मार्गेणेति भावः । अर्चिरादिमार्गविवक्षाऽन्यत्रा[4]चार्याभिप्रेतैव ; राये इति अत्र ब्रह्मणः प्राप्यत्वोपवर्णनात् । ब्रह्मैव हि सुस्थिरमनन्तमलौकिकञ्च धनम् । अत एव तत्र तत्रैवमुच्यते, "धनं मदीयं तव पादपङ्कजम", "यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतः",

"दुरीश्वरद्वार[5]बहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः ।
यदञ्जनाभं निरपायमस्ति मे धनञ्जयस्यन्दनभूषणं धनम ॥",

"न मे पित्रार्जितं [6]द्रव्यं न मया किञ्चिदार्जितम ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम्" इति ॥

अत्र चैवं शाङ्करं व्याख्यानम्, "सुपथा - शोभनेन मार्गेण । सुपथेति विशेषणं दक्षिणमार्ग-निवृत्त्यर्थम् । [7]विषण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन । अतो याचे त्वां पुनः पुनर्गमनागमनवर्जितेन शोभनेन पथा नयेति" इति । राये - धनाय[8] हिरण्यनिधिसरूपाय हिरण्मयपुरुषाय । त्वत्प्राप्तय इति भावः । अस्मान् - अनन्यप्रयोजनाननन्यगतींश्चेत्यर्थः । न केवलं माम्, अपि त्वनुबन्धिजनानपीति बहु-वचनस्याभिप्रायः । देव - अस्मदपेक्षितप्रदानानुगुणविचित्रजगत्सृष्टिस्थितिसंहारान्तःप्रवेशनियमनस्वाश्रित-विमोचनादिरूपविलक्षण[9]क्रीडायुक्त । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति मन्त्रेऽपि देवशब्दस्य एवमेवाभिप्रायः ॥ वयुनशब्दो ज्ञानवाची ; "माया वयुनं ज्ञानम्" इति नैघण्टुकोक्तेः । अत्र तु लक्षणया ज्ञातव्योपायपरः । विश्वानि वयुनानि - सर्वानपि तत्तदधिकारानुगुणचतुर्विधपुरुषार्थोपायान् यथावत् विद्वान् त्वमविदुषोऽस्मान्नेतुमर्हसीति भावः । "यो वै वेदांश्च प्रहिणोति तस्मै" इति मन्त्रपदानामप्येतदेव हृदयम् । "मुमुक्षुर्वै शरणमहं प्रपद्ये" इति मन्त्रगतं मुमुक्षुपदं विवृण्वन्नाह युयोध्यस्मज्जुहुराणमेन इति । "[10]हुर्छा कौटिल्ये" । जुहुराणं कुटिलं बन्धनात्मकमित्यर्थः । यद्वा अचिन्त्यप्रकार[11]कौटिल्यवत्तया बाधमानमिति भावः । अनेन विशेषणेनातितीव्रशोकवेगो द्योत्यते । एनः - अकृत्यकरणकृत्याकरणादिरूपं त्वदुपासनोत्पत्तिप्रतिबन्धकमित्यर्थः ; त्वत्प्राप्तिप्रतिबन्धकमिति वा । एन इत्येकवचनं जात्यभिप्रायकम् । वस्तुतस्तु - कियदिदं निवर्त्यमेनः ,

---

पा० [1] क्रीडायुक्त - ग, घ. ।
[2] क्रीडायुक्तेत्यनन्तरं मायेत्यादिकमेव - ग, घ. ।
[3] हीति नास्ति - ग, घ. ।
[4] अत्रेति नास्ति - ख. ।
[5] दरीवितर्दिका पा. ।
[6] किञ्चिदिति प्रसिद्धः पाठः ।
[7] निर्विण्ण इति तत्र पाठः ।
[8] राये हिरण्यनिधिसरूपाय पुरुषाय - ख. ।
[9] क्रीडेतिस्थाने कृतीति - पा. ।
[10] हृ कौटिल्ये - ख. ।
[11] कौटिल्यतया - ख. ।

भा० [1]**अस्मत् - अस्मत्तः । युयोधि - पृथक्कुरु विनाशयेत्यर्थः । भूयिष्ठां ते नमउक्तिं विधेम - 'अनन्यगतिः' [2]इत्यादिगुणैरावृत्तितश्च भूयसीं नमउक्तिं ते विदध्महे । व्यत्ययो हि बहुलमनुशिष्टः । नमउक्तेरनुवृत्तिं वा नाथं प्रति नाथते । "नम इत्येव वादिनः" इति हि मुक्तलक्षणा अपि पुरुषा मोक्षधर्मे [3]प्रत्यपादिषत । मानसकायिक[4] (योर्नमसोरभावेऽपि) नमस्काराभावेऽपि नमश्शब्दमात्रेण [5]प्रसत्तुमर्हसीत्युक्तिशब्दाभिप्रायः ॥**

---

प्र० निवर्तकानुरूपं हि न भवति । न हि सर्वशक्तेस्तवेदमनुरूपं लक्ष्यम् । नापि नमउक्तेः । भूयसी हि सा ' इत्येकवचनस्याभिप्रायः । **अस्मत्** - अस्मत्तः, **युयोधि** - पृथक्कुरु विनाशयेति भावः । यद्वा पृथक्कुरु । एतावदेव याचे त्वाम्, ' जुहुराणमेनोऽस्मत्तः प्रथमं वियोजये ' ति । नत् पश्चाद्यथामनोरथं विनाशयसि चेत्, विनाशय । पुरुषान्तरे संक्रामयसि चेत्, संक्रामय । नास्ति तत्रास्माकं निर्बन्ध इति भावः । **भूयिष्ठाम्** - अनन्यगतित्वादिगुणैरावृत्तितश्च भूयसीं **नमउक्तिं, ते** - अवाप्तसमस्तकामतया निरुपाधिकसर्वस्वामितया च नमउक्त्यन्यनिरपेक्षाय ते । **विधेम** - विदध्महे । व्यत्ययो[6] हि बहुलमनुशिष्टः । नमउक्तेरनुवृत्तिं वा नाथं प्रति नाथते । "नमइत्येव वादिन" इति हि [7]मुक्तानामपि लक्षणं मोक्षधर्मे श्रुतम् । मानसकायिकयोर्नमसोरभावेऽपि नमश्शब्दमात्रेण त्वं प्रसन्नो भवितुमर्हसीत्युक्तिशब्दाभिप्रायः । हे अग्ने देव विश्वानि वयुनानि विद्वान् त्वं जुहुराणमेनोऽस्मत्तो युयोधि । सुपथा अस्मान राये नय । वयं ते भूयिष्ठां नमउक्तिं विधेमेत्यन्वयः । नित्याञ्जलिपुटा [8]हृष्टा नम इत्येव वादिनो भवामेति भावः ॥

एवमस्मिन्ननुवाके आदितो मन्त्राष्टकस्य चेतनाचेतनरूप[9]मवरतत्त्वद्वयं कर्मयोगज्ञानयोगरूपं व्यवहितोपायद्वयञ्च प्रधानप्रतिपाद्यम् । उपरितनाष्टकस्य तु परतत्त्वपरमपुरुषविषयकं भक्तियोगरूपं साक्षात् साधनम् । अवशिष्टमन्त्रत्रिक (द्वय) स्य सर्वफलसाधनं प्रपदनं प्रधानप्रतिपाद्यम् । एवञ्च श्रीभगवद्गीताध्यायेषु प्रथमषट्कं प्रथमाष्टकस्योपबृंहणम्; द्वितीयषट्कं द्वितीयाष्टकस्य । तृतीयषट्कमवशिष्टमन्त्रत्रिकस्योपबृंहणम् । तृतीयषट्कं हि प्रथममध्यमषट्काभ्यामुक्ततत्त्वोपायपुरुषार्थविशदीकरणपूर्वकं शरणागतिविधिप्रधानम् । तत्र

**१८. मं. टि० आदिगुणै**रिति । आदिना अकिञ्चनत्वानन्यभावत्वादीनां प्रपत्तृगुणानां समनन्तरक्षणप्रभृतिसर्वसहृति(?)क्लेशक्षपणचणत्वरूपप्रवृत्तिगुणस्य, महावदान्यत्वाऽऽश्रितकृतव्याजाजरणापादकानवधिकरुणार्णवत्वादीनां सिद्धोपाय श्रीपरमपुरुषगुणानाञ्च ग्रहणम् । **ते भूयिष्ठा**मित्यन्वयकल्पनया त्वया भूयिष्ठत्वेनाभिमतामित्यर्थवर्णने भगवद्गुणमात्रं प्रकाशितं भवेत् । **ते विधेमे**ति स्वरसान्वयमपरित्यज्य भूयिष्ठामिति केवलग्रहणं तु तद्बुद्ध्या अस्मच्छक्त्यादिना शास्त्रदृष्ट्या चाबाधितसर्वप्रकारेण भूयिष्ठत्वलाभ इत्याशयः । **आवृत्तित** इति । प्रपत्तिरूपनमउक्तेस्सकृत्कर्तव्यत्वेऽपि फलहानोक्तेरावृत्तिः स्वतः प्राप्ता, अनुमता च 'सदैवं वक्ता' इत्यादौ । प्रणामविषये चाऽऽवृत्तिश्शास्त्रविहिता । अञ्जलिमेव महाभारं मन्यमानस्य च आवृत्तेरनन्यगतित्वादेश्च

पा० [1] **अस्मदि**ति नास्ति - ग, घ. ।
[2] अनन्यगतित्वादिगुणैरिति स्यादित्यस्मदाचार्यचरणाः ।
[3] प्रतिपादिताः ।
[4] मानसकायिकनमस्काराभावेऽपि - क. ।
[5] अर्हति - ग; अर्हन्तीत्यान्ध्रलिपिमुद्रणे । अर्हसीत्याचार्यचरणाभ्यूहितं - क. कोशे लब्धम् ।
[6] हीति नास्ति - ख. ।
[7] "मुक्तानां लक्षणं ह्येतत् यच्छ्वेतद्वीपवासिनाम् । बद्धाञ्जलिपुटा हृष्टा नम इत्येव वादिनः ॥" इत्यतः **मुक्तानामपी**त्यपिशब्दः श्वेतद्वीपवासिसमुच्चये; स्वराड्भावमापन्नानामपीत्याशयेन वा ।
[8] हृष्टा इत्येतदनन्तरं 'नमउक्तिं विधेमेत्यर्थः' इति अधिकं मुद्रिते ।
[9] अपरतत्त्व - ख. ।

**भा०** एवं परतत्त्वतद्विभूतियोगतदुपासनतत्फलविशेषान्[1] संगृह्य संहितेयं समपूर्यत ॥ १८ ॥

**व्यक्ताव्यक्ते वाजिनां संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादात् ।**
**वैश्वामित्रो विश्वमित्रं व्यतानीद्विद्वच्छात्रप्रीतये वेङ्कटेशः ॥**

**अभेदं भोक्तॄणामथ च भविनामेव परतां**
**तथा भेदाभेदं जिनसुगतनीतिं च जगति ।**
**असंपाद्यां मुक्तिं भवभयमलीकं च पठता-**
**मसावीशेत्यादिर्न कथमनुवाकः प्रतिभटः ॥**

---

**प्र०** चरमश्लोकस्य पूर्वार्धम्, "वायुरनिलममृतम" इति मन्त्रोक्तानुष्ठानविधायकम् । उत्तरार्धं तु, "युयोध्यस्मज्जुहुराणमेन" इति प्रार्थयमानानां प्रार्थनापूरणसङ्कल्पपूर्वकं शोकप्रतिक्षेपकमिति चरमश्लोकोऽप्यस्य मन्त्रद्विकस्योपबृंहणमेवेति सिद्धम । एवं परतत्त्वतद्विभूतियोगतदुपासनतत्प्रपदन[2]तत्फलविशेषान् संगृह्य संहितेयं समपूर्यत ॥ १८ ॥

वेदान्तगुरुपादाब्ज ध्याननिर्मलचेतसा ।
वाजिवेदान्तसारार्थः श्रीवत्साङ्केन दर्शितः ॥

यदिह रहस्यं विवृतं यद्वा न्यूनं वचोऽधिकं यच्च ।
कृपया तदिदं सर्वं देवः क्षमतां तथा महान्तोऽपि ॥

---

**टि०** दर्शने सति भूयिष्ठत्वबुद्धिस्सुतराम ॥ **भूयिष्ठा**मित्यत्र भूयसीमिति वचनं, "साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी" इति वचनं प्रत्यभिज्ञापयितुम । एवमुपनिषद्घटितत्वादस्याः परिपूर्णोऽतिशय इति च दर्शयति **एव**मिति ॥

आचार्यभाष्यतात्पर्यमास्माकं पृथगीक्ष्यताम् ।
यत्रान्यदूषणोद्धारस्तथा भाष्यार्थवर्णनम् ॥

अनुक्तावश्यकांशोक्त्यै सोऽहं श्रीवीरराघवः ।
पाठभेदोक्तिनैर्भर्यादिकार्षं लघु टिप्पणम् ॥

व्यशोधयं च वेदान्तगुरुभाष्यार्थदर्शकम् ।
नारायणमुनेर्मान्यमीशावास्यीयवार्तिकम् ॥

**पा०** [1]तदुपासनतद्विशेषान् - ग, घ. ।

[2] अत्र तत्फलेति पाठादप्याचार्यभाष्ये तादृशस्तात्पाठस्साधीयानिति सुबोधम् ।

भा० इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु
ईशावास्योपनिषद्भाष्यम् ।

[ कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥ ]

॥ श्रीरस्तु ॥

---

प्र० इति [1]श्रीमत्सर्वतन्त्रोभयवेदान्ताचार्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीवत्साङ्कश्रीमन्नारायणमुनीन्द्रस्य
कृतिषु
ईशावास्य[2]प्रकाशिका संपूर्णा ॥

श्रीरस्तु

टि० [1] सर्वतन्त्राण्यधीते वेद वेति सर्वतन्त्रः । "सर्वादेस्सादेश्च लुग्वक्तव्य" इति वार्तिकात् । स चासावुभयवेदान्ताचार्यश्चेति । [2] श्रीमद्वेदान्तदेशिकानुगृहीतभाष्यमुपजीव्य प्रवृत्ततया एवं व्याख्यान प्रकाशिकेत्येवैष आचार्यपरतन्त्रो निरदिक्षत् । ग्रन्थगौरवदर्शिनः पुनरिदमपि भाष्यमिति व्यवहरन्ति ॥

इति श्रीरङ्गरामानुजमुनिवरमहादेशिकचरणारविन्दवरिवस्याप्राप्तवेदान्तरहस्यस्य
तर्कार्णव-पण्डितरत्न-उभयमीमांसावल्लभादिबिरुदस्य
उत्तमूर्. ति. वीरराघवाचार्यस्य कृतिषु
प्रकाशिकासहित ईशोपनिषदाचार्यभाष्यपरिष्कारः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥
॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

॥ शुभमस्तु ॥

## टिप्पणपरिशिष्टम्

---

६-पु. **विनियोगपृथक्त्वतः** = विनियोगभेदात्। "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति पूर्वमीमांसासूत्रम् (४-३-५)। यद्येकस्योभयरूपत्वमनेकार्थत्वात्मकमेषितव्यम्, तत्र संयोगपृथक्त्वम् यद्यदर्थत्वमिष्टम् तत्तत्संबन्धप्रतिपादकवाक्यपृथक्त्वमपेक्षितम्। पृथक्पृथग्विनियोजकप्रमाणे सति एकमेवानेकार्थं भवतीति यावत्। अत एव दध्न इन्द्रियार्थत्वं होमार्थत्वञ्च वाक्यद्वयात्। तथा च नित्यनैमित्तिकरूपेण काम्यरूपेण च यानि पूर्वं विनियुक्तानि, तेषामेव विद्यार्थतयाऽपि विनियोगं व्यङ्क्तुमिदमिति।

६-पु. **अधिचिकारयिषितस्येति**। 'अधीतवेदः पुरुषः क्रमेण शारीरकमीमांसायामधिकरोति' इति श्रीभाष्ये भाषितम्। एवं पश्चादधिकारीभविष्यन्तं पूर्वमेव तत्त्वज्ञानवैराग्यभूषितवृत्त्याद्युपदेशेनाधिकारयितुमिच्छन्नयमनुवाकः संहितान्तर्गतोऽनुवाकः। एवमनुवाकेन गुरुणा वाऽधिकारयितुमिष्टस्याधीयानस्येत्यर्थः।

७-पु. **रूढिर्योगमिति**। न्यायोऽयं (६-१-१२) रथकाराधिकरणसिद्धः। तत्र हि रूढ्यर्थानार्थोपस्थितेः वर्णसमुदायश्रवणमात्रेणावयवविभागनिरपेक्षं भासितया शीघ्रत्वात् रूढ्यर्थबोध एव जायत इति रूढिर्योगशक्तिकार्यं वारयतीति रथकारशब्दो न रथं करोतीति व्युत्पत्त्या रथकर्तृत्रैवर्णिकपरः, किन्तु रथकाराख्य जातिविशेषपर इत्युक्तम्। तद्वदिहापि युक्तमिति शङ्का।

८-पु. **ऐन्द्रीन्यायादिति**। 'वचनात्त्वयथार्थमैन्द्री स्यात्' (पू. मी. ३-२-२) इत्यधिकरणे कदाचन स्तरीरसि नेन्द्र—' इत्यस्या ऐन्द्र्या ऋचः न इन्द्रपदरूढ्या इन्द्रोपस्थानाङ्गत्वम्, किन्तु 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति वचनात गार्हपत्योपस्थानाङ्गत्वम्। अतोऽन्यार्थविषयकत्वात् रूढिबाधेन गौण्या योगेन वा कथमपि इन्द्रपदं गार्हपत्यपरमित्युक्तम्। तद्वत् इहापि रूढिभङ्ग इति समाधिः।

८-पु. **सर्वत्वमाधिकारिकमिति** पू. मी. सूत्रम् (१-२-१)। यथा सर्वमोदनं भुङ्क्ते इत्यत्र सर्वशब्दोऽधिकृतसापेक्षो न त्रैलोक्यवर्तिनमोदनं गृह्णाति, तथैव 'पूर्णाहुत्या सर्वान् कामनवाप्नोति' इति सर्वशब्दोऽपि अधिकर्माधिकृतफलमात्रग्राहीति तदर्थः। तथा च सर्वशब्दस्संकुचितवृत्तिस्स्यादिति शङ्कितुराशयः।

११-पु. **नाविशेषादित्यादिसूत्रद्वयं** नियमादिति पूर्वपक्षसूत्रसमाधानरूपम्।

३०-पु. **दृष्ट्या गुणमभ्यर्थयते** इति पाठे दृष्ट्या सह तद्गुणमभ्यर्थयते इत्यर्थः। 'दर्शनं तत्साधनञ्चाभ्यर्थयते' इति हि प्रकाशिका।

३३-पु. **व्यवस्थोपपद्यत इति**। अत्र न्यायपरिशुद्धावेवमधिकमुक्तम् - "न चोद्देश्यानुगुणा तिङ्विभक्तिरिति नियमः, उपादेयानुगुणलिङ्गवचनादिनिर्देशवदत्रापि विरोधाभावात्। प्रयुञ्जते च पतञ्जलिप्रभृतय उपादेयानुगुणामपि तिङ्विभक्तिम् — 'स पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः' इत्यादिषु" इति।

४०-पु. **विधेम**। विध विधान इति तौदादिकाद्विधतेः प्रार्थनायां लिङि रूपमिदं साध्वेवेत्याहुः।

---

## अपूर्वपदानि

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| वासम् | १-मं | अर्पत् | ४ | संभूतिः | १२ | जुहुराणम् | १८ |
| असुर्याः | ३ | अविद्या | ९ | वयुनानि | १८ | विधेम | १८ |

## शोधनम्

| पु. | पं. | | पु. | पं. | |
|---|---|---|---|---|---|
| २ | २२ | स तू ह। तेजो | २७ | १७ | निष्पते: |
| ७ | २४ | स्वेन | ३३ | २० | स्वरूपैक्य |
| ८ | २२ | कारणवादि | ३४ | १५ | अहंवै |
| ९ | २० | विद्यामंता | .. | २३ | दुर्निवार |
| १० | १७ | सर्वता | ३५ | २४ | अशिपर |
| १७ | ५ | तैत्तिरीये | ३६ | १८ | णादिभि: |
| २० | २४ | म्मिमभवा | ४० | ८ | त्वदर्चना |
| २१ | २० | योगनिष्ठ: | .. | १० | क्तमलौकि |
| २५ | | * | .. | २४ | [इतिशब्दस्त्याज्य:] |
| २५ | २१ | कर्म | | | |

## ईशोपनिषन्मन्त्र अकारादि



## प्रमाण–अकारादि



1. सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकायामपि वचनमिदमुपात्तम्। स्तोत्रभाष्येऽपि १४-श्लोके। माध्यन्दिने (६-१-३) आनुपूर्वीभेदोऽस्ति। काण्वं द्रष्टव्यम्। अर्थानुवादो वा एकम्। एवञ्च नामानीति बहुवचनपाठोऽपि करिष्यमाणानेकनामकोटीकरणोपपद्यते।

1. अत्रैवमानुपूर्वी संप्रत्युपनिषद् दृश्यमाना -, "एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमाः" इति ।

| | पु. | | | पु. | |
|---|---|---|---|---|---|
| परमात्मनि | १० | * | युष्मद्युप | ३२ | पा. १-४-१०५ |
| पराङ्मुखा | १६ | विष्णुधर्म ९९-१३ | योगोयोग | ३२ | विष्णुसहस्रनाम |
| परीक्ष्य | १६ | मु. उ. १-२ | यो ब्रह्माणं | | श्वे. उ. ६ |
| पूर्वमेवाहं | ३२ | तै. आ. १-२३ | यो नित्यं | श्रीभाष्यकारविषयं(तनियन) | |
| पृथगात्मानं | ८ | श्वे. उ. १-६ | योऽसावती | ३१ | म. स्मृ. १-७ |
| प्रकृतिं पुरुष | ३२ | गी. १३-१९ | रजसा | २९ | म. भा. शां. ३५८ |
| प्रजापतिश्चर | ३१ | उत्तरनारा | रामसुग्रीव | १८ | रा. सुन्द. ३५ |
| प्रणवोधनुः | ३८ | मु. उ. २-२ | रूढिर्योग | ७ | पू. मी. ६-१-१२ |
| प्राप्यम्य | ३६ | हारीतसंहिता | वर्षायुत | १५ | अहिर्बु. सं. २-४३ |
| प्रवाहेन | २३ | मु. उ. १-२ | वायुश्चान्त | ३६ | बृ. ४-३-३ |
| बहुधाति | २२ | उत्तरनारा | वाशब्दोऽत्र | ११ | श्रीभा. ३-४-१४ |
| ब्रह्मलोक | २७ | छा. उ. ८-१३-१ | विजरो | ३६ | छा. उ. ८-७ |
| ब्रह्मविदा | २० | तै. आन. १ | विश्वमेवेदम् | ९ | तै. ना. ना. |
| ब्रह्मादिषु | ३७ | म. भा. | शठमति | १० | वि. पु. ३-७ |
| भोक्ताभोग्यं | ९ | श्वे. उ. १ | शास्त्रदृष्ट्या | ३० | ब्र. सू. १-१-३१ |
| मङ्गला | ३७ | अमर. ३-३-२४६ | सत्यकामः | २२ | छा. उ. ८-१५ |
| महान प्र | ३२ | श्वे. उ. ३ | सत्यंज्ञानं | ३२ | तै. आन. १ |
| मायावयुन | ४१ | निघ. ३-९ | सत्यब्रह्म | ३० | तै. आन. ६ |
| य आत्मनि | १५ | बृ. माध्य ३-७-३० | सपूर्वेषां | ३८ | पात. यो. १-२६ |
| य आत्मानं | ३० | बृ. माध्यं ३-७-३० | स ब्रह्मा स | ९ | तै. ना. ना. |
| य आत्मापहत | ३६ | छा. उ. ८-७ | समानेवृक्षे | ५ | मु. उ. ३-१ |
| य आदित्ये | ३० | बृ. ५-७-१३ | सर्वकर्मा | ३२ | छा. उ. ३-१४-२ |
| य एषोऽन्त | ३२ | छा. उ. १-६-६ | सर्ववासौ | ७ | वि. पु. १-२ |
| यःपुनरेतं | ३८ | प्र. उ. ५-५ | सर्वत्व | ८ | पू. मी. १-२-१ |
| यःपृथिवी | ३० | बृ. ५-७ | सर्वे पाप्मा | २१ | छा. उ. ८-४-१ |
| यःपृथिव्यां | १५ | बृ. ५-७ | सर्वोपाधि | ३६ | दक्षस्मृतिः |
| यच्चकिञ्चि | १७ | तै. ना. ना. | सहस्रशी | १७ | तै. ना. ना. |
| यथाक्रतुः | ३९ | छा. उ. ३-१४-१ | साक्षादप्य | ३० | ब्र. सू. १-२-२९ |
| यदाग्निपुरुषः | ४० | बृ. १०-१ | सुपथा | | शाकुरोपनिष. |
| यद्ब्रह्मणो | ३२ | तत्त्वसार ६९ | स्थितेमनसि | ३९ | वराहचरमश्लोक |
| यस्सर्वेषु | १५ | बृ. ५-७-१९ | स्नेहपूर्णेन | ३९ | |
| यस्यपृथिवी | १८ | बृ. ५-७-७ | स्वभाविकी | ३२ | श्वे. उ. ६ |
| यस्याग्निः | ४० | बृ. ५-७-९ | हरति पर | १० | वि. पु. ३-७ |
| यस्यात्मा | १८ | बृ. माध्यं. ३-७-३० | | | |

* बार्हस्पत्यस्मृतिगतमिदमिति श्रीमद्रहस्यत्रयसारप्रमाणाकरादावुक्तम् । नानामुद्रणसत्त्वात् क्वचिदन्वेषणीयम् ।

1. एतदधिकरणसिद्धन्यायोऽयम् । न स्वयं सूत्रम् ।

2. "संवत्सरसहस्राणि पक्षिराडिव संपतन् । नैवान्तं कारणस्यैति यद्यपि स्यान्मनोजवः" इति संप्रतितनः पाठः ।

श्रीः

# केनोपनिषत्

( तलवकारोपनिषत् )

[सामवेदशान्तिपाठ —ओं. आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि । सर्वं ब्रह्मौ(ह्मौ)पनिषदं माऽहं ब्रह्म निराकुर्याम । मा मा ब्रह्म निराकरोत । अनिराकरणमस्तु । अनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । ओं शान्तिश्शान्तिश्शान्तिः ॥]

श्रीः

श्रीमते रङ्गरामानुजस्वामिने नमः

[ येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥ ]

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम्

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥ १ ॥

॥ श्रीः ॥

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

### उपनिषद्भाष्यपरिष्कारः

श्रीरङ्गरामानुजयोगिनस्त्रीन् वेदान्तरामानुजयोगिनश्च ।
गुरूनशेषांश्च रमानिधिञ्च प्रणम्य केनोपनिषत्परोऽस्मि ॥

[ श्रीमन्निगमान्तमहादेशिकैरीशावास्ये दर्शितां सरणिमनुसरत्सु श्रीरङ्गरामानुजस्वामिभाष्येष्वपि सर्वत्र व्याख्यातव्यानामौपनिषदवाक्यखण्डानां पूर्णानुवादपूर्वकमेव व्याख्यानं तालकोशेषु स्पष्टं लक्ष्यते । तदनुरोधेन कतिपयोपनिषद्भाष्यमुद्रणञ्च आनन्दाश्रममुद्रालये कृतमस्ति । ( तत्र मुद्रिता केनोपनिषत्प्रकाशिका परं न प्रसिद्धरङ्गरामानुजस्वामिविरचितं भाष्यमित्यन्यदेतत् । ) एवंसति आन्ध्राक्षरादिमुद्रितकोशेषु उपनिषद्भागस्य तत्र तत्र भाष्ये क्वचित् प्रतीकरूपेण निवेशः, क्वचिन्मूलभागस्य परित्यागः इत्यादिरीतिरवलम्बिता किं तादृशमातृकोपलम्भेन, किं वा उपनिषदोऽप्युपरि पृथङ्मुद्रणात् पुनर्निवेशो वृथेति स्वयमेव तादृशांशानां निष्कासकल्पनादिति विमृश्यमेतत् । यथातालकोशं मूलवाक्यकृत्स्नानुवादपूर्वकभाष्यपठन एव च भाष्यकृदभिमतपाठादिनिष्कर्षे. पदेपदे मूलग्रन्थावलोकननैरपेक्ष्यम्, अर्थतत्त्वावधारणसौकर्यञ्चेति विचिन्त्य यथोपलम्भमेव सर्वमुपनिषद्भाष्यं निवेश्यते । तत्र केनोपनिषद्भाष्यं कोत्तिमङ्गलतालकोशमेव प्रायशोऽनुसृत्य, पाठान्तरञ्च प्रदर्श्य प्रकाश्यते । संकेतक्रमस्तु — कोत्तिमङ्गलतालकोशः क., अडयार् कोशागारतालकोशः ख. मुद्रितग्रन्थाक्षरादिकोशाः ग. इति । ]

**हरिः ओम् । केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति ॥ १ ॥**
**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः ।**

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
व्याख्यां तलवकारोपनिषदः करवाण्यहम् ॥ २ ॥

१. परमात्मस्वरूपं प्रश्नप्रतिवचनरूप[1]प्रकारेण प्रकाशयितुं प्रस्तौति—'केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं(त्रे[2]) क उ देवो युनक्ति'—मनः केन वा(?) **प्रेषितं**—प्रेरितं सत् स्वविषये प्रवर्तत इति भावः । **इषितम्**—इष्टं मतम् । प्राणानां मध्ये **प्रथमः प्राणः**—मुख्यः प्राणः केन प्रेरितस्सन् **प्रैति**—प्रकर्षेण सञ्चरति । तथा केन वा प्रेरि[3]तामिमां **वाचं**—वागिन्द्रियमवलम्ब्य व्यवहरन्ति लोकाः । तथा चक्षुश्श्रोत्रयोश्च कः[4] प्रेरकः । अचेतनानामेषां चेतनाप्रेरितानां कार्यकरत्वासंभवात् इति गुरुमुपेत्य शिष्यः पप्रच्छेत्यर्थः ॥

२. गुरुः प्रतिवक्ति—'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः । चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति'—[5]चक्षुरादीनां प्रकाशकं

**व्यासम्** – वेदान् विभज्य वेदान्तार्थं निर्णीतवन्तं ब्रह्मसूत्रकृतं भगवन्तं बादरायणम् । **अन्यान्** – श्रीमद्वेदान्तदेशिक – सुदर्शनभट्टार्याभिधानश्रुतप्रकाशिकाचार्यप्रमुखान् । **तलवकारोपनिषदः** – जैमिनीयापरपर्यायतलवकारोपनिषद्ब्राह्मणान्तर्गतस्य केनेत्यादेरनुवाकस्य इति उपलभ्यमानरीत्या वक्तव्यं भवति । चतुरध्यायात्मकं जैमिनीयोपनिषद्ब्राह्मणं हि मुद्रितमस्ति । तत्र द्वादशाऽनुवाकात्मनि चतुर्थेऽध्याये अयं दशमोऽनुवाक इति ॥ शाङ्करे तु अयं नवमाध्याय इत्युक्तम् ।

मनःप्रभृतीनामानि पञ्च करणान्येव ब्रह्मज्ञानसाधनत्वेन बहुशः उपनिषत्सूद्घोषितानि । तदिदम् **अस्मद्विरचितात् वेदान्तपुष्पाञ्जलितो** व्यक्तीभविष्यति । अत इहापि पञ्चानामेव ग्रहणम् । तत्रैतेषां ब्रह्मणि यथावत् प्रवृत्तिमपश्यन् कृत्स्नब्रह्मज्ञानं विना च अमृतत्वं न भवतीति मन्वानः तदर्थं तत्प्रेरकदेवप्रसादेन तेषां वशीकरणमिच्छन् शिष्यः पृच्छति केनेति ॥

प्रेषितमिति पदसद्भावात् **इषितामित्यस्य** पुनरुक्तता मा भूदिति इष्टमित्यर्थस्वीकारेऽपि **इषितामित्यस्य** प्रेत्युपसर्गं विनाऽपि प्रेषितामित्यर्थः अपस्यापेक्षितत्वात् स्वीकृतः – **प्रैतीत्यत्र** प्रेत्युपसर्गं **प्रेयायेति** वक्ष्यमाणस्थल इव मत्वा व्याचष्टे **प्रकर्षेण सञ्चरतीति** । **व्यवहरन्तीति** । अविशेषात् व्यवहर्तव्यं सर्वं कर्म । वाचमिति तु प्रसिद्धकरणपञ्चकान्तर्गतवागिन्द्रियपरम् । **इमाम्**– प्रकृतप्रश्नवाक्यादिकरणभूतजातीयाम् । **चक्षुःश्रोत्रयोरिति** द्विवचनं गोळकादिरूपावयवात्मकप्राप्यभ्रातिरिक्ताऽऽहङ्कारिकेन्द्रियविवक्षणात् समाहारो न कर्तव्य इत्याशयेन स्यात् । एवञ्च मूले चक्षुःश्रोत्रमिति नैकं पदम् । समाहारविवक्षया वा स्यात्

**प्रतिवक्तीति** । संपूर्णब्रह्मविज्ञानाय हि श्रोत्रादिवशीकरणं त्वदिष्टम् । न श्रोत्रादीनां तथा ब्रह्मग्रहणसामर्थ्यमस्ति । एवं तेषामसामर्थ्यादेव प्रत्येकं तत्तदधिष्ठातृभिर्दैवतान्तरैरप्यत्र साध्यं न किञ्चि-

1. प्रश्नप्रतिवचनप्रकाररूपेण क. । 2. चक्षुःश्रोत्रे. ख । 3. प्रेषितां. ग. 4. क उ. ग. 5. अयं ख. पाठः । अन्यत्र—यश्चक्षुरादीनां प्रकाशकं.

**चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ २ ॥**
**न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।**
**न [1]विद्मो न विजानीमो यथैतदनुशिष्यात् ॥ ३ ॥**

चक्षुराद्यनधीनप्रकाश[2]मप्राणाधीनप्राणनञ्च यत् **स उ**—स एव, इत्येव**मतिमुच्य** ज्ञात्वा **अस्माल्लोकात्** अर्चिरादिना मार्गेण गत्वा मुक्ता **भवन्ती**त्यर्थः ॥

३. तदेव प्रपञ्चयति—'न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः' ॥ तत् किमुपदेष्टव्य (तर्हि तत् कथ[3]मुपदेष्टव्य)मित्यत्राह— 'न विद्मो न विजानीमः त(?)थैतदनुशिष्यात्'— किं तदिति पृष्ट आचार्यः, 'नान्तरिन्द्रियेण न बहिरिन्द्रियेण[4] च ज्ञेयं तत्'इत्येव तदुपदिशेत् ॥

---

दसि । तर्हि कृत्स्नज्ञानाभावे कथममृतत्वमिति न भेतव्यम् । एभिः करणैर्दुर्ग्रहमिदमिति ज्ञानत एवामृतत्वसंभवात् । देवमनुष्यादीनां सर्वेषामप्यत्र अकृत्स्नज्ञत्वस्याविशिष्टत्वादिति प्रतिवक्तीति निष्कर्षः । श्रवणमननप्रवचनध्यानदर्शनानां क्रमभावित्वात् गुरुणा श्रोत्रादीनां क्रमेणोक्तिः । पूर्वं शिष्यादृतक्रमस्तु, 'किमुत्तरोत्तरकार्यसाधनवशीकारप्रयासेन, पूर्वपूर्वसाधनस्यैवाक्रान्त्यात् । ग्रन्थादर्थश्रवणोपयोगि चक्षुश्श्रोत्रमपि खलु न वशेऽस्मा'ति दर्शयितुम् ॥ श्रोत्रादिप्रेरकः क इति प्रश्ने श्रोत्रादिप्रेरको यस्स इति समाधानायोगात् **श्रोत्रस्य श्रोत्रमि**त्यादिकं न श्रोत्रादिप्रवृत्तिनिर्वाहकपरम् , किन्तु 'यथा शब्दादीनां विषयाणां ग्राहकं श्रोत्रादिकं तद्ग्राहकमेव, न तु तद्ग्राह्यमपि, तथा श्रोत्रादिकं प्रति श्रोत्रादिभूतं ब्रह्म श्रोत्रादिग्रहसाधनमेव, न तु श्रोत्रादिग्राह्यमपी' त्यर्थपरमित्याशयेनाह – **चक्षुरादीनां प्रकाशकमि**त्यादि । उपरितनमन्त्राणां पर्यालोचनया अयमर्थो विवक्षितो गम्यत इति भावः । **वाचमि**ति यथाशाङ्करं व्यत्ययेन प्रथमान्तमभिप्रेतम् , अन्येषां प्राणवत् प्रथमान्तत्वात् । **स एवे**ति । चक्षुरादीनां स्वरूपस्थितिहेतुरुक्तरूपश्च यः स एव तत्प्रवृत्तिहेतुरपि; न पुनरादित्यादीनि अधिष्ठातृदेवतान्तराणीति भावः । एतावता को युनक्तीतिप्रश्ने, स एव चक्षुःश्रोत्रादि सर्वं युनक्तीति समाधिरुक्तः । अन्तिमप्रश्नवाक्यानुसारेण सौकर्यात् स इति प्रथमानिर्देशः । **अतिमुच्ये**त्यतः प्राक् इतिशब्दोऽध्याहार्यः । एवं तथाविधस्य नियन्तृत्वे तस्याविज्ञेयत्वाद्दुर्लभममृतत्वमिति शङ्कां परिहर्तु**मतिमुच्ये**त्यादि मूलम् । उक्तांशोपासनमेव पर्याप्तमिति तदाशय इति प्रकरणान्निश्चित्याह **इत्येवमि**ति । उपसर्गबलेन धातोः संदर्भानुगुणार्थवर्णनं युक्तमित्याशयेन अतिमुच्येत्यस्य ज्ञात्वेत्यर्थ उक्तः । मोचनातिक्रमणं हि ग्रहणमेव । यदि तु पूर्णज्ञानायोगप्रतिपादनाय अतिमुच्येत्यस्य अधिकांशविमोकेनेत्यर्थ एवेष्यते, तर्हि ज्ञात्वेति न तदर्थः, किन्तु धीरपदविवक्षितार्थः । अतिमुच्य धीरा इत्यस्य अधिकांशविमोकेन अपेक्षितांशज्ञानिन इत्यर्थ इति भावो वर्णनीयः ।

३. ननु उत्तरखण्डे 'नाहं मन्ये' इत्यादिमन्त्रद्वयेन श्रवणमनननिदिध्यासनाविषयत्वकथनात् तद्वदिहापि **नो मन** इति मननाविषयत्वम् **न विद्मो न विजानीम** इति श्रवणनिदिध्यासनाविषयत्वञ्च कथितमस्तु । किञ्चोक्तानां पञ्चानां करणानां मध्ये चक्षुरादित्रयस्य पूर्वार्धोक्ततया **विद्म** इति श्रोत्रजज्ञानं, **विजानीम** इति प्राणायामाङ्गकध्यानं च विवक्षितुमर्हम् । श्रवणमननाद्यविषयत्वञ्च अपरिच्छिन्नत्वात् । इदमेव च **अन्यदेवे**त्यादिना उपरि विव्रियते । अतः किमिति 'नान्तरिन्द्रियेण न बहिरिन्द्रियेणे' त्यर्थवर्णनमिति चेत् – उच्यते । नात्र प्रत्यक्षमात्राविषयत्वमुच्यते । किन्तु सर्वज्ञानाविषयत्वमेवेत्युत्तरमन्त्रावतरणे व्यक्तम् । तत्र 'न श्रोत्रं न प्राण' इत्यनुक्त्वा **न विद्म** इत्यादिमन्त्रान्तरादरणात्

---

1. न विद्म माध्व. 2. चक्षुराद्यनधीनप्रकाशञ्च ग. 3. ख.ग. 4. 'च' इति नास्ति ख.ग.

**अन्यदेव तद्विदितादथो अविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ४ ॥**
**यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥**
**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥**
**यच्चक्षुषा न पश्यति येन चक्षूंषि [1]पश्यति ।**

४. ननु तस्य सर्वात्मना ज्ञानाविषयत्वे तुच्छत्वं स्यात्; ब्रह्मजिज्ञासया गुरूपसदनादिकञ्च न स्यादित्यत्राह—'अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे'—ये अस्माकं पूर्वे गुरवः ब्रह्मोपादिशन् तेषाम्, 'सर्वात्मना विदितादपि विलक्षणं सर्वात्मना अविदितादपि विलक्षणमेवंरूपं ब्रह्म' इतीदृशीं वाचं वयं श्रुतवन्त इत्यर्थः ॥

५–९. एतदेव प्रपञ्चयति—'यद् वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते'—वागादिभिर्यदप्रकाश्यं स्वयं वागादीन्द्रियप्रकाशकञ्च[2], तदेव ब्रह्मेति[3] जानीहि । यद्वस्तु इदमिति इदङ्कारगोचरतया हस्तामलकवत् सुविदिततयोपासते जनाः, तद् ब्रह्म नेत्यर्थः । एवमुत्तरत्रापि ॥ 'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति'—येन[4]—परमात्मना साधनेन पुमानितरत् पश्यतीत्यर्थः ॥ 'यत् प्राणेन प्राणिति येन प्राणः

अन्तरिन्द्रियसाध्यमननध्यानादिकं बहिरिन्द्रियसाध्यज्ञानमात्र इन्द्रियप्रकाशे विभज्य क्रोडीकृतं स्यादित्याशयादेवं व्याख्यानमिति ॥ **यथेत्यनेन**, न विद्म इत्याद्युक्तवेदनाद्यविषयस्वरूपप्रकार उच्यते । तादृशप्रकारवत्तया ब्रह्म उपदिशेदिति । **तथेति** भाष्यदर्शितैवोपनिषत्पाठसत्त्वे तु सोऽर्थस्स्पष्ट एव ॥

५, ९. **यद्वस्त्वित्यादि** । श्रुतप्रकाशिकायां जिज्ञासाधिकरणे, 'नेदं यदिदमुपासत इत्यस्यायमर्थः—यदिदं प्रतीकमुपासते, तन्न । तदेव परं ब्रह्म त्वमुपास्स्वे'ति वर्णितोऽर्थः इह विवक्षित इति भाव्यम् । समन्वयाधिकरणे च भाषितम्, 'नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते । अपितु ब्रह्मणो जगद्वैरूप्यं प्रतिपाद्यत' इति । तत्र च श्रुतप्रकाशिका, 'यदिदमुपासत इत्यत्रेदमंशे निषेधस्य तात्पर्य'मिति । तर्हि उपासत इति वाक्यानि किमर्थानीति चेत्—तेन वागादीनामुपासनोपयोगितया प्रश्न इति व्यज्यते । अयमाशयः—अर्थान्तराणामिव ब्रह्मणोऽपि कार्त्स्न्येनोपासनं वागादिवशीकारे सुकरमिति हि तदधिष्ठातृदेवताप्रश्नः शिष्येण कृतः । तत्रैवं गुरुरुपदिशति, 'वागादिसम्यग्वशीकारेण संपूर्णतच्छक्त्युपयोजनेनोपास्यमानं कार्त्स्न्येन यद्भवति तद्विलक्षणमिदं ब्रह्म, स्वयं वागादिप्रकाशकत्वात् यथावत्तदप्रकाश्यत्वा'दिति । **वागादीन्द्रियप्रकाशकञ्चेति** । वागिन्द्रियादिसर्वप्रकाशकञ्चेत्यर्थः । **अभ्युद्यते** प्रोच्यते । अत्र **येनेति** न कर्तरि तृतीया, किन्तु येन चक्षूंषि पश्यतीत्यादाविव करणे हेतौ वा । **चक्षूंषीति** गोलकाभिप्रायम् ।

1. पश्यन्ति माध्व. दृश्यन्त इत्यर्थश्च तत्र. 2. 'यत्' इति पुनरपि **ग.** 3. 'इति' इति नास्ति, **ग.** 4. येनेत्यादिस्थाने, 'पश्यति - पश्यन्तीत्यर्थः । पूर्वोत्तरानुगुण्यात्'इति **ग.** पाठः । **ख.** कोशेऽत्र व्याख्यानमेव नास्ति । अत्यन्तविलक्षणे आनन्दाश्रममुद्रणे तु 'पश्यति—दृश्यन्ते इत्यर्थ' इत्यस्ति । तत्र पश्यन्तीति पाठे पूर्वोत्तरानुगुण्यं 'चक्षूंषी'त्यस्यापि प्रथमान्तत्वरूपमित्येतावन्मात्ररूपं ग्राह्यम् । दृश्यन्त इति पाठे कर्मणिप्रयोगरूपानुगुण्यमपि । **ऋजुः** पुनरुपरि दर्शितः पाठः ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥
यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥
यत् प्राणेन न प्राणिति येन प्राणः प्रणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ९ ॥

इति प्रथमः खण्डः

हरिः ओम् । यदि मन्यसे सुवेदेति [1]दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्
यदस्य त्वं यदस्य देवेषु अथ नु मीमांस्यमेव ते मन्ये विदितम् ॥ १ ॥

प्रणीयते—**प्रणीयते**—[2]प्राणितीत्यर्थः ॥ इति प्रथमः खण्डः ।

२. १. शिष्यं प्रत्याह—'यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् यदस्य त्वं यदस्य देवेषु अथ नु मीमांस्यमेव ते'—अहं ब्रह्मस्वरूपं सुष्टु वेदेति यदि मन्यसे, न तत् तथा । अस्य ब्रह्मण इह लोके यदपि रूपं त्वं वेत्थ, तन्नूनं **दभ्रमेव**—अल्पमेव । देवेषु [3]यद्रूपं त्वं वेत्थ, तदपि **दभ्रमेव**[4]—अल्पमेव । त्वया ज्ञातं सर्वं ब्रह्मणो रूपमल्पमेव । न सर्वं ब्रह्मरूपं त्वया ज्ञातम् । अतः परमेव ते [5]ब्रह्म विचार्यम्; नातः पूर्वं सम्यग्विचारितमित्यर्थः । एतद्वाक्यं श्रुत्वा सम्यग्विचार्य शिष्य आह—'मन्ये विदितम्'—अहं विदितमेव मन्ये ॥

योगबलाद्वा इन्द्रियदर्शनम् । इदञ्च द्रष्टव्यसर्वोपलक्षणम् । **श्रुतम्** – शाब्दबोधविषयः । **प्रणीयते** इत्यस्य प्रणीतमिति व्याख्यानमुद्रणमशुद्धम् । 'अभ्युद्यते' 'पश्यती'ति वर्तमानकालस्यापि पूर्वं श्रवणेन भूतकालविवक्षाया अनावश्यकत्वात् । पुंलिङ्गप्राणशब्दं प्रति प्रणीतमिति विशेषणायोगाच्च । किन्तु पूर्वं वागादिपदव्युत्पत्तिपर्यालोचनया 'उदितं, उद्यते, मनुते, मतम्' इत्यादिप्रयोगात् इहापि—प्रपूर्वक अनधात्वर्थ एव विवक्षित इति, 'प्राण्यते' इति स्यादित्यालोचितम् । तत्र प्राणितीति पाठो लब्ध एवेति स एव साधिष्ठः ।

२. १. मन्येऽविदितमिति ब्राह्मणमुद्रणे कृतः अकारप्रश्लेषः, स्वर्गे लोकेऽज्येये इति तत्कृताकारप्रश्लेषवत् सर्वव्याख्यानानारूढः । तत्र अज्येये इति पाठस्वीकारे स्वापेक्षया ज्येयोरहिते सर्वज्येष्ठे अनुत्तमे इत्यर्थो भाव्यः ।

यद्यपि – शिष्य आहेति किमर्थम्, सर्वमपि गुरुवाक्यमेवास्तु । 'नाहं मन्ये सुवेदे'ति मन्त्रोऽपि शिष्यं प्रति गुरुणा स्वास्थितिप्रदर्शनार्थं इत्युक्तिसंभवात्; यथा आनन्दाश्रममुद्रितव्याख्याने । यद्वा गुरुवाक्यरूपप्रथमश्लोकान्तर्गतः 'मन्ये विदित'मिति भागोऽपि परं गुरुवाक्यमेवास्तु, उपरि तु शिष्यवाक्यमिति; यथा **परमार्थप्रकाशिकायामस्माभिरे**वोक्तम् –अथापि, 'यदि मन्यसे सुवेदेति,' नाहं मन्ये सुवेदे' ति च सन्दर्भे परिशील्यमाने उक्तिप्रत्युक्तिरूपता स्वरसा । एवं च तद्वत् उत्तमपुरुषघटितत्वात् 'मन्ये विदित'

1. दहरं माध्व. दभ्रं शङ्क. 2. **प्रणीयते** प्रणीतमित्यर्थः ग. **प्रणीयते** प्राणीत्यर्थः ख. 3. पूर्वं यदिति, अत्र यदपीति च युक्तम्—अथापि तत्रैव मूले **अपिशब्द** इति तथाऽनुवादः । 4. अत्र **दभ्रमेवाल्पमेवेति ग. कोशे नास्ति** । 5. **ब्रह्मेति नास्ति ग.**

**नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।**
**यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ ॥ २ ॥**

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥**

२. २. कथमित्यत्राह—'नाहं मन्ये सुवेदेति नो न वेदेति वेद च'—अहं सम्यग्वेदेत्यपि न मन्ये । न वेदेत्यपि न । अपितु वेदैव । [1]ततश्च कार्त्स्न्येन ज्ञातत्व मज्ञातत्वञ्च नास्ति; किञ्चित् ज्ञातत्वमस्तीत्यर्थः । 'यो नस्तद्वेद तद्वेद नो न वेदेति वेद च'—**नः** अस्माकं ब्रह्मचारिणां मध्ये **तत्** 'नो न वेदेति वेद च' इति निर्दिष्टं तत् अर्थतत्त्वं यो वेद, स तद् ब्रह्म वेदेत्यर्थः ।

२. ३. 'यस्यामतं तस्य मतं मतं यस्य न वेद सः'—यः ([2]यस्तु) परिच्छिन्नत्वेन ब्रह्म न मनुते, स ब्रह्म मनुते । यस्तु परिच्छिन्नत्वेन ब्रह्म मनुते, स तु न जानातीत्यर्थः । 'अविज्ञातं विजानतां विज्ञातमविजानताम्'— ब्रह्म एतावदिति परिच्छेदज्ञानवतां ब्रह्माविज्ञातं भवति । परिच्छिन्नत्वज्ञानशून्यानां ब्रह्म विज्ञातं भवतीर्थः । उक्तञ्च **भगवता भाष्यकृता**— "यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति ब्रह्मणोऽनन्तस्य अपरिमित[3]गुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन ब्रह्मैतावदिति [4]ब्रह्मपरिच्छेदज्ञानवतां ब्रह्म विज्ञातम् अमतमित्युक्तम्; अपरिच्छिन्नत्वाद् ब्रह्मणः । अन्यथा, 'यस्यामतं तस्य मतं', 'विज्ञातमविजानताम्' इति तत्रैव मतत्वविज्ञातत्ववचनं विरुध्येत" इति । ततश्चाविज्ञातत्वादिवचनं कार्त्स्न्येन ज्ञानाविषयत्वपरम्; न तु सर्वात्मना ब्रह्मणः[5] ज्ञानागोचरत्वपरमिति द्रष्टव्यम् । तथा हि सति, 'ब्रह्मविदाप्नोति परम्,' 'तमेव विदित्वाऽति मृत्युमेति' इत्यादिशास्त्राणामसंगतार्थकत्वप्रसङ्गात्, वेदान्तानां नैरर्थक्यप्रसङ्गाच्च ।

मिति भागोऽपि शिष्यकर्तृक एवोचित इत्याशयेन यथाशाङ्करमभाषि । एवमपि **यस्यामत**मित्यादिकं शाङ्करोक्तरीत्या श्रुतिकर्तृकवचनमेव वाऽस्तु, मध्ये संवादविच्छेदे मानाभावात् गुरुवाक्यमेव वा । यस्यामतमिति मन्त्रमात्रमपि वा शिष्यवाक्यमस्त्विति तत्रानिर्भरं व्यङ्क्तुं **यस्यामत**मित्यत्र श्रुतिराहेत्यादिकं नोक्तम् ॥

२. २. **नाह**मिति मन्त्रस्य एवमप्यर्थस्संभवति 'अहं सुवेदेति न मन्ये; न वेदेति चाहं नो वेद । अस्माकं मध्ये यः **तद्वेद**—ब्रह्म वेद, सः **तद्वेद**—सुवेदेत्येवं न वेद्यमित्येतत् वेद; न वेदेति च स नो वेद' इति । एवंच **मन्ये विदित**मित्युक्तं पूर्वार्धेन विवृतम् । **यो नस्तद्वेदे**ति तदेव विदितत्वमन्यनिष्ठतया उक्त्वा उपरितनांशेन पूर्वार्धवत् विवृतमिति औचित्यम् । एवं प्रकारान्तराण्यपि संभावितानि । अथापि संभावित प्रकारेषु शाङ्करप्रकारोऽप्यस्तु काममिति अनतिभेदेन स एव दर्शितः ॥

२. ३. **विजानताम्** परिच्छिन्नत्वेन ध्यायतामित्यर्थः ॥

1. 'ततश्च कार्त्स्न्येनाज्ञातत्वञ्चास्ति; किञ्चिद्ज्ञातत्वमप्यस्तीत्यर्थः' ग. 2. क. ख. 3. श्रीभाष्ये अपरिच्छिन्नेतिवत् अपरिमितेत्यपि तत्रे पाठः । 4. ब्रह्मेति नास्ति ग. 5. ब्रह्मण इति नास्ति ग.

**प्रतिबोधविदितममृत[1] (विदितं मत) ममृतत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥**

**इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।**
**भूतेषुभूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥**

**इति द्वितीयः खण्डः**



२. ४. 'प्रतिबोधविदितममृतममृतत्वं हि विन्दते'—प्रतिनियतो बोधः **प्रतिबोधः** । सत्यत्वज्ञानत्वानन्तत्वादिरूपासाधारणधर्मविशिष्टतया ज्ञातम् **अमृतं**— ब्रह्मस्वरूपं तत्क्रतुन्यायेन स्वोपासकस्याप्यमृतत्वं **विन्दते**—लम्भयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयं विदिधातुः । लम्भनप्रकारमेवाह—'आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्'—'स नो देवश्शुभया स्मृत्या संयुनक्तु' इत्युक्तरीत्या विद्यानिष्पत्त्यनुकूलं वीर्यं प्रसन्नेन परमात्मना लभते । प्रसन्नपरमात्माऽऽहितवीर्यार्जितया विद्यया अमृतत्वमश्नुत इत्यर्थः ॥

२. ५. तादृशब्रह्मज्ञाने त्वरामुत्पादयति—'इह चेदवेदीदथ सत्यमस्ति ; न चेदिहावेदीत्, महती विनष्टिः'—इहैव जन्मनि ब्रह्म ज्ञातवां[2]श्चेत्, **अथ**—समनन्तरमेव **अस्ति**—सन् भवति । सत्य[3](?) ज्ञानाभावे आत्मनोऽसत्ता भवति । 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुत्यनुरोधादिति द्रष्टव्यम्[4] । 'भूतेषुभूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति'—**भूतेषुभूतेषु**— सर्वभूतस्थं परमात्मानं प्रज्ञाशालिनः स्वेतरसमस्तविलक्षणत्वेन निर्धार्य अस्माल्लोकादर्चिरादिमार्गेण परमात्मानं प्राप्य मुक्ता भवन्तीत्यर्थः ॥ इति द्वितीयः खण्डः ।

२. ४. प्रतिबोधेत्यादि । उपनिषत्सु यथेच्छं पदच्छेददर्शनात् कर्तृपदाध्याहारगौरवपरिहाराय **प्रतिबोधवित्** प्रतिनियतबोधवित् तत्तद्विद्यावेदस्थितमात्रविषयमौपदेशिकं बोधं प्राप्तः, **इतं** कृत्स्नज्ञानं विना एवमेव पूर्वैः प्राप्तं, **मतमभिमतममृतत्वं** विन्दते । तत्र न वाक्यार्थबोधमात्रमलम् । किन्तु भक्तिरूपापन्नविद्यापर्यन्तमावश्यकमित्युत्तरार्धेनोच्यत इति व्याख्याऽपि संभवेत् । परंतु **प्रतिबोधविदितममृत**मिति भाष्यसंमतः पाठः । न तु प्रतिबोधविदितं मतमिति । मतशब्दाव्याख्यानात्, अमृतमिति ताळकोशे प्रतीकोपलम्भात् ; अमृतं ब्रह्मस्वरूपं तत्क्रतुन्यायेनेत्यादिव्याख्यानाच्च । न च अप्रसिद्ध एवं पाठ इति वाच्यम् – उपरि, **न चैनदुपस्मरती**ति पाठेऽप्येवमाशङ्कायास्तुल्यत्वात् । यथावदध्ययनपारम्पर्यविच्छेदात् तत्र पाठविषये प्रागेव विवादः स्थितस्स्यादिति चेत्, तुल्यमिहापि ॥

1. विदितं मतं, शाङ्क., माध्व. 2. ब्रह्मज्ञानवान् **क.** 3. सत्यः ज्ञानाभावे **ग.** सत्य ज्ञानाभावे **क.ख.** वस्तुतः सत्यमिति मूलस्थानुवादः । सत् भवतीत्येतत् सत्यमित्यर्थः । यद्वा सत्यत्र जन्मनि ज्ञानाभावे इति रीत्या स्यात् । 4. '**इह चेदशकद् बोद्धुं प्राक् शरीरस्य विस्रसः । ततस्सर्गेषु लोकेषु शरीरत्वाय कल्पते**' इति (कठवल्ली. 6.) मन्त्र इहानुसंधेयः ।

**हरिः ओम्। ब्रह्म ह देवेभ्यो विजिग्ये [1]तस्य ह ब्रह्मणो विजये देवा अमहीयन्त।**
**त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥ १ ॥**
**तद्धैषां विजज्ञौ। तेभ्यो ह प्रादुर्बभूव।**
**तन्न व्य[2]जानत(न्त) किमिदं यक्षमिति ॥ २ ॥**
**तेऽग्निमब्रुवन्, जातवेद एतद्विजानीहि किमेतद्यक्षमिति।**
**तथेति ॥ ३ ॥ तदभ्यद्रवन् ॥ तमभ्यवदत् कोऽसीति ॥**
**अग्निर्वा अहमस्मीत्यब्रवीत्, जातवेदा वा अहमस्मीति ॥ ४ ॥**
**तस्मिंस्त्वयि किं वीर्यमिति ॥ अपीदं सर्वं दहेयम्, यदिदं पृथिव्यामिति ॥ ५ ॥**
**तस्मै तृणं निदधावेतद्दहेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाक दग्धुम्।**

३. १–२. **आत्मना विन्दते वीर्य**मित्युक्तार्थे आख्यायिकामाह—ब्रह्म ह देवेभ्यो विजिग्ये'— परमात्मा देवानामनुग्रहार्थमसुरादीन् शत्रून् विजितवान्।—'तस्य ह ब्रह्मणो विजये देवा अमहीयन्त'— ब्रह्मकर्तृकविजये सति देवाः पूजिता अभवन्।—'त ऐक्षन्त अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति'—देवाः अयमसुरविजयोऽस्मत्कर्तृक एव। तदनुकूलसामर्थ्यादिकमप्यस्मदीयमेवेत्यमन्यन्त।—'तद्धैषां विजज्ञौ'- तादृशं तेषामभिमानं परमात्मा ज्ञातवानित्यर्थः। —'तेभ्यो ह प्रादुर्बभूव'—तेषां देवानामनुग्रहार्थं तत् ब्रह्म यक्षरूपं प्रादुर्भूतम्। —'तन्न व्यजानत किमिदं यक्षमिति'—एतत् यक्षस्वरूपं किमिति ते देवा **न व्यजानत**—न ज्ञातवन्त इत्यर्थः।

३. ३–१०. 'तेऽग्निमब्रुवन् जातवेदः एतद्विजानीहि किमेतद्यक्षमिति'— जातवेदः एतद्विजानीहि किमेतद्यक्षमितीत्युक्तवन्तः।—'तथेति तदभ्यद्रवन्। तमभ्यवदत्, कोसीति। अग्निर्वा अहमस्मीत्यब्रवीत् जातवेदा वा अहमस्मीति'— तथेति स यक्षसमीपं गतः तेन कोऽसीति पृष्टः, अग्निः जातवेदाः इति प्रसिद्धं नामद्वयमुक्तवानित्यर्थः।—'तस्मिंस्त्वयि किं वीर्यमिति। अपीदं सर्वं दहेयं यदिदं पृथिव्यामिति'—तव क सामर्थ्यमस्तीति यक्षेण पृष्टोऽग्निः पृथिव्यन्तर्वर्तिसकलदाहसामर्थ्यमस्तीत्युक्तवान्। —'तस्मै तृणं निदधौ एतद्दहेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाक दग्धुम्। स तत एव निववृते'— तहीदं तृणं दहेति यक्षेणोक्तः सर्वेण[3] जवेन तत्समीपं गतः दग्धुमसमर्थो निवृत्त इत्यर्थः। **उपप्रेयाय**—समीपं

३. १. ननु तत्तदिन्द्रियाधिष्ठातृदेवताप्रसादेनाभिमतं सेत्स्यतीत्यत्र तासामपि सर्वथा हृषीकेशाधीनत्वमाख्यायिकया दर्शयति **ब्रह्म ह**ेत्यादिना। सूत्रितञ्च, 'ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्' इति। **ऐक्षन्तेति**। अत्र शाङ्करम् 'असुरान् जित्वा जगदरातीनीश्वरसेतुभेत्तॄन्, देवेभ्यो जयं तत्फलञ्च प्रायच्छत् जगतः सीम्ने—सर्वशक्तेः जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्ते'ति॥ **यक्षमिति** पूज्यमित्यर्थः॥

1. अथ तस्य ह माध्व. 2. व्यजानन्त माध्व. 3. सर्वजवेन ख. ग.

**स तत एव निववृते, नैत(नैन)दशकं विज्ञातुम् यदेतद्यक्षमिति ॥ ६ ॥**

**अथ वायुमब्रुवन्, वायवेतद्विजानीहि किमेतद्यक्षमिति ॥**
**तथेति ॥ ७ ॥ तदभ्यद्रवत् ॥ तमभ्यवदत्, कोऽसीति ॥**

**वायुर्वा अहमस्मीत्यब्रवीत्, मातरिश्वा वा अहमस्मीति ॥ ८ ॥**
**तस्मिंस्त्वयि किं वीर्यमिति ॥**
**अपीदं सर्वमाददी[1]य(यं), यदिदं पृथिव्यामिति ॥ ९ ॥**

**तस्मै तृणं निदधौ, एतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाकाऽऽदातुम् ।**
**स तत एव निववृते, नैत(नैन)दशकं विज्ञातुम्, यदेतद्यक्षमिति ॥ १० ॥**

**अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति ॥**
**तथेति तदभ्यद्रवत् ॥ तस्मात्तिरोदधे ॥ ११ ॥**

**[2]स(?) तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् ॥**
**तां होवाच किमेतद्यक्षमिति ॥ १२ ॥**

**इति तृतीयः खण्डः**



गत इत्यर्थः ।—'नैतदशकं विज्ञातुं यदेतद् यक्षमिति'—एवं देवान् प्रति उक्तवानिति शेषः । एवमुत्तरत्रापि ।

३. ११-१२. 'तस्मात्तिरोदधे'—**तस्मात्** मघोनस्सन्निधेः, एतस्य [3]गर्वभङ्गो मा भूदिति तिरोहितमभवदित्यर्थः ।—'तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् । तां होवाच किमेतद्यक्षमिति'—तस्मिन्नेव प्रदेशे हिमवत्पुत्रीं बहुभिराभरणैश्शोभमानां पार्वतीं सर्व[4]ज्ञामिन्द्रानुग्रहाय प्रादुर्भूतां दृष्ट्वा तत्समीपमागत्य, इयं सर्वं जानातीति मन्यमानः किमेतत् यक्षमिति पप्रच्छेत्यर्थः ॥ इति तृतीयः खण्डः ।

**तिरोदध** इति । अग्निवाय्वोरिवेन्द्रे व्यवस्थितकार्यविशेषस्य दुर्वचतया, तं प्रति, त्वयि किं वीर्यमिति प्रश्ने उत्तरमप्युचितमयं न ब्रूयादिति तमपृष्ट्वैव तिरोदधे । अन्यथा ह्यस्याधिको **गर्वभङ्ग**स्स्यादिति ॥ **तस्मिन्नेवेति ।** कथमपि तद्यक्षं विज्ञातव्यमिति श्रद्धया तस्य तत्रैव स्थितत्वादिति भावः । **बहुशोभमाना**मित्यस्य बहुषु मध्ये शोभमानामिति निर्धारणे समासो न युक्तः । अतो बहुभिश्शोभमानामित्याह । बहु इति क्रियाविशेषणं पृथक्पदमिव मुद्रितं ब्राह्मणे । **हैमवती**मित्यस्य हेममयाभरणवतीमित्यर्थान्तरमपि **शाङ्करे । उमाम्** उमारूपेणाविर्भूतां विद्यामिति च । एवम् **उमा**मित्यत्रापि उ इति पृथक्पदमिति वा एकपदत्वेऽपि उकारवाच्यां मां लक्ष्मीमिति वाऽर्थ इति कल्प्येत—अथापि पार्वतीमुखेनेन्द्रस्य शिक्षणं समुचिततममिति स्फुटप्रतिपन्नार्थ एवाऽऽदृतः । अपरिचितलक्ष्मीदर्शने हि यक्षस्यैवेदं रूपान्तरमिति मतिरस्य स्यात् ॥

1. आददीय. शाङ्क. माध्व. 2. स तस्मिन् शां. माध्व. 3. गर्वेति क. कोशे नास्ति । 4. सर्वज्ञामिति नास्ति ग.

**हरिः ओम्। ब्र(¹सा ब्र)ह्मेति होवाच, ब्रह्मणो वा एतद्विजयेमहीयध्वम्² (ध्वे) इति।**
**ततो हैव विदाञ्चकार ब्रह्मेति ॥ १ ॥**
**तस्माद्वा एते देवा अतितरामिवान्यान् देवान्, यदग्निर्वायुरिन्द्रः।**
**ते ह्येनन्नेदिष्ठं पस्पृ³शुः। ते(स)ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २ ॥**
**तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान्। स ह्येनन्नेदिष्ठं पस्पर्श।**
**स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ ३ ॥**
**तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इति, इन्न्यमिष⁴-**

४. १. 'ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति'— ब्रह्मैव यक्षरूपेण युष्मन्मोहशमनाय प्रादुर्भूतम्। अतो ब्रह्मसंबन्धिनि विजये निमित्ते पूजां ⁵प्राप्नुत। अस्माभिरेव विजयः कृत इति दुरभिमानस्त्यक्तव्य इत्यर्थः। —'ततो हैव विदाञ्चकार ब्रह्मेति'— तदुपदेशादेव ब्रह्मेति ज्ञातवानित्यर्थः।

४. २–३. 'तस्माद्वा एते देवा अतितरामिवान्यान् देवान्, यदग्निर्वायुरिन्द्रः। ते ह्येतन्नेदिष्ठं पस्पृशुः। ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति' —तस्मादेव हेतोः एत एवाग्निवाय्विन्द्रा इतरान् देवान् अतिशेरत इव। **इव**शब्द एवार्थः। अतिशेरत एवेत्यर्थः। यस्माद्धेतोः **नेदिष्ठं**—समीपे वर्तमानं तद् ब्रह्म **पस्पृशुः**—दृष्टवन्तः, यतश्च हेतोः **प्रथमो विदाञ्चकार**—⁶प्रथमास्सन्तो ब्रह्मेति विदाञ्चक्रुः—अत एवैते देवान्तरापेक्षया अग्निवाय्विन्द्राः अतिशयित (अतिशय⁷) वन्त इत्यर्थः। वचनव्यत्ययश्छान्दसः। —'तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान्। स ह्येनन्नेदिष्ठं पस्पर्श। स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति'— अग्निवाय्विन्द्राणां मध्ये यस्मादिन्द्रस्सन्निहितं ब्रह्म दृष्टवान्; सर्वेभ्यः पुरस्तात् पार्वतीमुखात् इदं ब्रह्मेति ज्ञातवान्। अतस्सर्वातिशायीत्यर्थः।

४. ४–५. 'तस्यैष आदेशः'—**तस्य** आविर्भूतस्य⁷ सद्यस्तिरोभूतस्य ब्रह्मण ⁸**एष आदेशः** वक्ष्यमाण उपमानोपदेश इत्यर्थः। —'यदेतद् विद्युतो व्यद्युतदा⁹ इति'—यथा

४. १. पूर्ववाक्ये **स** इति, अत्र वाक्ये **सा** इति च पदं भाष्ये न व्याख्यातम्; नापि गृहीतम्। तत्र सा इति पदं विनैव अनेके मुद्रणमप्युपनिषदो दृश्यते। **अत** इति। एवमनुकूलब्रह्मसद्भावादित्यर्थः ॥

४. ४. विदितवतामपीन्द्रादीनां सम्यग्दर्शने विस्मरणे च कारणमथोच्यते। **यदेतद्विद्युत** इत्यादेः शाङ्करव्याख्याने बहुः क्लेशः। इह विवक्षितयोजना त्वेवम्—**विद्युत** इतीदं षष्ठ्यन्तं **यदेतदि**त्यत्रान्वेति।

1. सा ब्रह्म शां. ब्रह्म माध्व. 2. महीयध्वं शां. अमहीयध्वं माध्व. 3. पस्पर्शुः शां. पस्पृशुः माध्व. 4. न्यमीमिषदा शां. माध्व. 5. प्राप्नुतेति लङि मध्यमपुरुषबहुवचनम्। अतो मूले **अमहीयध्वमि**ति पदच्छेदो भाव्यः। **देवा अमहीयन्ते**ति पूर्वं प्रयोगादौचित्याच्च। प्राप्नुथेति लडन्तरूपं शाङ्करे। 'महीयध्वे' इति जैमिनीयब्राह्मणमुद्रणरीत्यनुसरणे तद् युक्तम्। 6. **प्रथमा** इत्यादेः **छान्दसः** इत्यन्तस्य स्थाने, '**प्रथमं विदाञ्चक्रुरित्यर्थः**' इत्येतावदेव **ख.ग.** ते इत्यत्र **स** इति पाठान्तरमपि ब्राह्मणमुद्रणे। 7. तस्य विज्ञातस्य **ग.** 8. य एषः **ग.** 9. विद्युता **ख.**

(मीमिष)दा इत्यधिदैवतम् ॥ ४ ॥

अथाध्यात्मम्, यदेत(न[1])द्गच्छतीव च मनोन[2](मनोऽनेन) चैन(त)दुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ५ ॥

विद्युतो विद्योतनं क्षणिकम्, तद्वदित्यर्थः। **आ** इति प्रसिद्धौ। उपमानान्तरमाह—**इन्न्यमि (मीमि) षदा इति**—अत्रापि **आ** इत्येतत् पूर्ववत्। इच्छब्दः उपमानान्तरसमुच्चयार्थः। यथा—**न्यमिषत् (न्यमीमिषत्)** निमेषः[3] प्रकाशतिरोभावः क्षणेन, एवं ब्रह्मापि तिरोऽभूत्[4] इत्यर्थः। यथा विद्युतस्तिरोहिता भवन्तीत्यर्थः। (र्थे[5]) न्यमीमिषदिति वचनव्यत्ययश्छान्दसः। **इत्यधिदैवतम्**—अनात्मभूताकाशादिगतविद्युद्विषयं ब्रह्मणं उपमानदर्शन[6]मुक्तमित्यर्थः। **अथाध्यात्मम्**—अनन्तरं देहस्थो दृष्टान्त उच्यत इत्यर्थः।—**यदेतद्गच्छतीव च मनः। न चैतदुपस्मरत्यभीक्ष्णं संकल्पः** एतद् ब्रह्म मनो गच्छतीव। ब्रह्मविषयकमनोगमनमिवेत्यर्थः। यथा मनसो [7]ब्रह्मविषयीकरणं न चिरस्थायि, एवमेव यक्षस्य ब्रह्मणः प्रकाशोऽपीत्यर्थः। मनसा ब्रह्मविषयीकरणं क्षणिकमेव; न चिरानुवृत्तमिति दर्शयति—**न चैतदुपस्मरत्यभीक्ष्णं संकल्पः**—न हि मनोजनितसंकल्पो ध्यानविशेषः **अभीक्ष्णं**—चिरम् एतद्ब्रह्मोप[8]स्मरति; न विषयीकरोतीत्यर्थः। [9]ततश्च यथा ब्रह्मणो मनसा विषयीकरणं न चिरानुवृत्तम्, एवं यक्षस्य

**व्यद्युतदा** इति, **न्यमिषदा** इति च विद्युतो द्योतनं द्वयम्, एष आदेश इति। विद्योतनवत् निमेषोऽपि विद्युत एव विवक्षितः, न तु चक्षुषः, अधिदैवतप्रकरणात्। चक्षुर्ह्यध्यात्मम्। तथाच प्रकाशतिरोभाव इति भाष्ये विद्युत इति शेषः। विद्युतः प्रकाशो न्यमिषदित्युक्तौ प्रकाशपदाध्याहारो दोषः॥ प्रथमाबहुवचनान्तत्वविवक्षया विद्युत इत्यस्यैव कर्तृपरत्वे त्वाह— **यथा विद्युतस्तिरोहिता** इत्यादि। व्यद्युतदित्यस्याप्युपलक्षणमिदम्। एतद्वाक्यस्यापि विद्युद्विषयकत्वस्याशयायास्य विशिष्य ग्रहणम्। न्यमीमिषदिति स्वार्थे णिजिति शाङ्करम्। अत्र तु किमपि नोक्तम्। ब्राह्मणे तु न्यमिषदिति पाठो दृश्यते। तत्र इत् इत्यपि नास्ति। **अर्थः** इति प्रथमान्तपाठे 'यथा विद्युत' इत्यत्र 'यद्वा विद्युत' इति स्यात्?

४. ५. अवशकरणप्रकृतशिष्यानुभूतो दृष्टान्त उच्यते। **एतद्ब्रह्म मनो गच्छतीवे**ति। यद्यपि यदेतदित्यस्य पूर्ववाक्य इवात्रापि उपमानपरत्वं युक्तम्, न तु एतच्छब्दस्य ब्रह्मपरत्वम्। तथा **मनो गच्छती**ति मनसो विषयान्तरगमनमपि विवक्षितुं शक्यम्, तत्रापि तस्यास्थिरत्वात् – अथापि विद्युतो ब्रह्मागोचरत्ववत् मनसोऽपि तथात्वमित्यस्याभावात् विषयान्तरापेक्षया प्रकृतब्रह्मग्रहणमेव संभवत् वक्तुं साम्प्रतम्। एवमेतच्छब्दस्य ब्रह्मपरत्व एव **एतद्गच्छती**त्यन्वादेशस्योपपत्तिः, ब्रह्मण एव प्रागुपात्तत्वादित्याशयः॥ विद्युतो द्योतननिमेषाविव मनसोऽपि गमनतदभावौ **नचैन**दिति भाष्यनिर्दिष्टे पाठ एव स्पष्टौ भवतः। सर्वत्र **नचे**त्यस्य स्थाने **अनेनचे**त्येव पाठो दृश्यते। क्वचिदेव तु (सर्वथैव केनोपनिषदमन्यथाऽन्यथा पठति दिगम्बरव्याख्याने) 'नैवचे'ति पाठोऽस्ति। **अनेनचे**ति पाठे त्वेवमर्थः। **अनेन** मनोगमनेन सङ्कल्परूपज्ञानमभीक्ष्णमुपस्मरतीति। मनोगमनाभावे च न स्मरतीति **इवे**त्यत एव सिद्धम्। एवमुपपादकवाक्यस्यार्थमुक्त्वा उपपाद्यार्थेन सह प्रकृतं निगमयति **ततश्चे**ति। एवं ब्रह्मणः प्रादुर्भूतस्यापि

1. यदेतद्गच्छतीव माध्व. शां. 2. मनोनेनैव तत् माध्व मनोनेनचैतत् शां. 3. यथा निमेषप्रकाश **ग.** 4. तिरोहितम् **ख.** तिरोभूतम् **ग.** 5. न्यमीमिषदित्यादि छान्दसइत्यन्तं नास्ति **ख.** 6. उपमानमुक्तम् **ख.** 7 **ब्रह्मणो क. ख.** 8. **न हि** इत्येवारभ्य—'**नोपस्मरती**ति पठति क. 9. **ततश्चे**ति नास्ति **ख.ग.**

**तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् ।**
**स य एतदेवं वेद अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥**
**उपनिषदं भो ब्रूहीति ॥**
**उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥**
**तस्यै तपो दमः कर्मेति प्रतिष्ठा, वेदास्सर्वाङ्गानि(णि) सत्यमायतनम् ॥ ८ ॥**

[1]ब्रह्मणः प्रादुर्भावोऽपि न चिरानुवृत्तः । अत्र दृष्टान्तोक्तिव्याजेन ब्रह्मध्यानानुवृत्तिर्दुःशकेति दर्शितं भवति ।

४. ६. **तद्ध तद्वनं नाम; तद्वनमित्युपासितव्यम्**—एतादृशमहिमविशिष्टं तद्ब्रह्म सर्वैरपि जनैर्वननीयत्वेन प्रार्थनीयत्वेन वननामकं भवति । तस्मात् तद् ब्रह्म वनमित्युपासितव्यमित्यर्थः । वनत्वेनोपासनस्य फलमाह—**स य एतदेवं वेद, अभि हैनं सर्वाणि भूतानि संवाञ्छन्ति**—सर्वैरपि प्रार्थनीयो भवतीत्यर्थः ॥

४. ७–८. एवम् **आत्मना विन्दते वीर्य**मित्यर्थे स्थिते सति वीर्यावाप्तिहेतुभूत-भगवदनुग्रहसाधनप्रतिपादिकामुपनिषदं [2]पृच्छति—**उपनिषदं भो ब्रूहीति ।** इतर आह—**उक्ता ते उपनिषत् ।ब्राह्मीं वाव त उपनिषदमब्रूमेति**- ब्रह्मप्रतिपादिकां प्रधानोपनिषदमवोचाम । अतः प्रधानोपनिषदुक्तैव । साधनप्रतिपादिकाञ्चोपनिषदं वक्ष्यामि, यदि शुश्रूषसे इति भावः । **तस्यै तपो दमः कर्मेति प्रतिष्ठा- तस्यै**- उक्तायै उपनिषदे । साधनभूतानि कायशोषणलक्षणं तपः, इन्द्रियनिग्रहरूप उपशमः, अग्निहोत्रादिलक्षणं कर्म चोपनिषच्छब्दि-

सम्यक्प्रत्यक्षवेद्यत्वं न भवतीति दर्शितम् । अत्र मनोऽगमनसिद्धत्वकारात् सम्यग्ध्यातुमशक्यत्वमपि सिद्धमित्याह **अत्रे**ति ॥

४. ६. **तद्वन**मिति समस्तं नामधेयं शाङ्करे । तस्य प्राणिजातस्य वननीयमिति । प्रकृतपरामर्शिन-स्तच्छब्दस्य नामधेयमध्यनिवेशोऽनौचित्यात **वन**मित्येव नामोक्तमिह । तद्धेत्यत्र तत्पदं तादृशमहिमविशिष्टमित्यर्थकम् , एतादृशमहिमविशिष्टत्वादित्यर्थकं वा ।

४. ७. **इतर आहे**ति । अयं भावः—किम् आख्यायिकां फलार्थवनत्वोपासनञ्च श्रुत्वा, 'ईदृशं नापेक्षितम्, किंतु मोक्षार्थब्रह्मविद्योपदेश एव' इत्याशयेन **उपनिषदं ब्रूही**ति पृच्छयते, किं वा ब्रह्मविद्यासाधनोपनिषज्जिज्ञासया? नाद्यः, आरम्भ एव **श्रोत्रस्य श्रोत्र**मिति मन्त्रेण ब्रह्मोपासनविशेषस्योक्तत्वात् उपपादितत्वाच्च । अन्त्ये पुनः उच्यते, श्रूयताम । केवलश्रवणादिमात्रं न कार्यकरम् , किन्तु **अधीत-**स्वाध्यायाधीनतपःपर्यन्तसाध्यविद्याविशेष इति ।

४. ७–८. एवमाख्यायिकादिकथनं यदर्थम् , तदेतावता प्रदर्शितम । एवं भगवदनुग्रहस्यैव मुख्यत्वेपि सर्वेषु तदनुग्रहादर्शनात्तत्कारणमप्यावश्यकमिति शिष्य एवं पप्रच्छ । **तस्यै** इतीदमुपनिषदे इति व्याख्यातम् । **साधनभूतानी**त्यादि पृथग्वाक्यम् । **वेदादिसत्यान्ते**ष्वपि तदन्वयः । 'दमदशम' इत्युभयनिर्देशे दमशब्दार्थसंकोचेऽपि अत्र बाह्येन्द्रियनिग्रहरूपदमोपलक्षितान्तरिन्द्रियनिग्रहरूपशमोऽपि इन्द्रियनिग्रहत्वेन रूपेण दमशब्दार्थ इत्याशयेनाऽऽह **उपशम** इति । साधनमध्ये तपआदीनां प्रतिष्ठात्वम । वेदादीनाञ्चाऽऽय-

1. ब्रह्मण इतीदमधिकं ख. 2. **उपनिषदं भो ब्रूहीति** शिष्येणोक्ते इतर आह— उक्ता ते. ग.

योऽवा एतामेवं वेद, अपहत्य पाप्मानमनन्ते
स्वर्गे लोके ज्येये प्रतितिष्ठति ²प्रतितिष्ठति ॥ ९ ॥

इति चतुर्थः खण्डः

इति सामवेदीयतलवकारोपनिषत् ।

---

ताया ब्रह्मविद्यायाः प्रतिष्ठा– दार्ढ्यहेतुः । वेदास्सर्वाङ्गानि सत्यमायतनम्– षडङ्गसहिताश्च वेदाः सत्यवदनञ्च ब्रह्मविद्योत्पत्तिकारणमित्यर्थः ॥

४. ९. **यो वा एतामेवं वेद**— एतां ब्रह्मविद्यामुक्तविधप्रतिष्ठायतनोपेतां यो वेद, –**अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति**– स सर्वाणि पापानि विधूय कालपरिच्छेदशून्ये **ज्येये**– ज्यायसि ज्येष्ठे सर्वोत्तरे **स्वर्गे लोके**– वैकुण्ठलोके प्रतिष्ठितो भवतीत्यर्थः । अनन्तज्येयपदसमभिव्याहारात् स्वर्गलोकशब्दो भगवल्लोकपरः ॥ इति चतुर्थः खण्डः ।

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजस्स मुनिराद्रियतां मदुक्तिम् ॥

इति
श्रीमत्तातयार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकाल-
मुनिपादसेवासमधिगतपारमहंस्यस्य
**श्रीरङ्गरामानुजमुनेः**

**तलवकारोपनिषत्प्रकाशिका**
**केनोपनिषद्भाष्यम् ।**
**श्रीरस्तु**

तत्त्वं विद्योत्पादकत्वरूपम् । तथाच सत्यादिरूपे ब्रह्मचर्यनियमे स्थित्वा अङ्गान्यधीत्य व्युत्पत्तिं संपाद्य कर्मब्रह्मरूपवेदार्थं निश्चित्य निष्कामकर्मानुतिष्ठन् इन्द्रियाणि नियम्य तपश्चरणेन दर्शनसमानाकारब्रह्मविद्यां निष्पादयेदिति भावः । अत्रोत्तरोत्तरभाविनः पूर्वं पूर्वं निर्देशः तपइत्यादिना ।

४. ९. **अमृता भवन्ती**ति प्रागुक्तफलमेव विवृणोति **यो वा** इति ॥

इति श्रीमद्वेदान्तरामानुजयतीन्द्रमहादेशिकचरणसरसीरुहमधुव्रतस्य
श्रीरङ्गरामानुजयतीन्द्रमहादेशिकपदारविन्दपरिचर्याप्राप्तसर्व-
वेदान्तरहस्यस्य तर्कार्णवादिबिरुदस्य वात्स्य**वीरराघवस्य**
कृतिषु **केनोपनिषद्भाष्यपरिष्कारः** पूर्णः ॥
शुभमस्तु

1. यो ह वा एतामुपनिषदमेवं माध्व. 2. ज्येये प्रतितिष्ठति ज्येये प्रतितिष्ठति माध्व.

## केनोपनिषदर्थसंग्रहः ।

१. पूर्णोपास्यात् परोऽनन्तो वागादीनामगोचरः। देवस्तेषां नियन्तेति ब्रह्म विज्ञाय मुच्यते॥
२. कात्स्न्र्येनावेद्यमप्येतद्विदित्वेह यथायथम्। तत्प्रसादाप्तशक्तिस्सन् विद्यया विन्दतेऽमृतम्॥
३. अग्निवाय्विन्द्रमुख्यैस्तदपि त्रैलोक्यदैवतैः। अवेद्यमखिलेशानमनुग्रहपरं सताम्॥
४. विद्युद्वत् क्षणभानं तद्वनं स्थैर्येण वेदितुम्। शिष्यन्ते सत्यमङ्गानि वेदाः कर्म दमस्तपः॥
५. इत्थं तलवकारोपनिषत्खण्डचतुष्टये। वशीचिकीर्षुर्वागादि मुमुक्षुः प्रतिबोधितः॥

## सभाष्यटिप्पण केनोपनिषद्विषयः ।



## केनोपनिषद्भाष्य प्रमाणाकरः

| पु. | पं. | | | |
|---|---|---|---|---|
| ६ | १४ | यतो वाचः—वचनं विरुध्येत | श्रीभाष्यजिज्ञासा-श्रुतिघट्ट. | |
| ,, | ,, | यतोवाचोनिवर्तन्ते | तैत्तिरीय- आनन्दव- | ९ |
| ,, | १८ | ब्रह्मविदाप्नोतिपरम् | ,, ,, | १ |
| ,, | १९ | तमेवविदित्वा | श्वेताश्व. उ. | ३ |
| ७ | ९ | सनोदेवः | तै. नारायण- | १०-१९ |
| ,, | १४ | असन्नेव स | तै. आनन्दव- | ६ |

## केनोपनिषद्गतमन्त्रमात्र–अकारादि.



**अपूर्वपदानि.**—अतिमुच्य १-२. अधि १-४. प्रतिबोधः २-४. यक्षम् ३-२. वनम् ४-६.

**प्रतिबोधो** नाम प्रतिनियतो बोधः अव्यभिचारिभक्तिरूपापन्नज्ञानमपि स्यात, 'प्रतिबुद्धा न सेवन्त' इत्यादिवत ।

**शोधनम्—** १-१६ उपनिष. २-१६ श्रीमद्रू. ६-१३ भवतीत्यर्थः. ६-१५ ब्रह्माविज्ञातम्. ७-३० संधेयः ; (६-४-१४पृ.) इहैवसन्त इतिमन्त्रश्च । ८-२६ तत्तदिन्द्रि । श्रीः ।

## कठोपनिषत्द्भाष्यगत मुख्यविषयाः ।



अवकाशाभावात् टिप्पण्यर्थे पट्टिका न कृता । **कठोपनिषदर्थसंग्रहो** ग्रन्थान्ते द्रष्टव्यः

# कठोपनिषदकाराद ।

श्री.

# कठोपनिषत्

[कृष्णयजुर्वेदीयैतच्छान्तिपाठः—सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ओं शान्तिश्शान्तिश्शान्तिः ॥ ]

हरिः ओम् उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ ।

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

येनोपनिषदां भाष्यं रामानुजमतानुगम् । रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

## श्रीरङ्गरामानुजमुनिविरचितं प्रकाशिकाभिधानं भाष्यम्



अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।

अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥

व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।

व्याख्यास्ये विदुषां प्रीत्यै कठवल्लीर्य(र्लीं य)थामति ॥

उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ । उशन्—कामयमानः । 'वश

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः । श्रीनिवासपरब्रह्मणे नमः

### उपनिषद्भाष्यपरिष्कारः

भावप्रकाशिकायां श्रुतिवचसा शाङ्करार्थमनुभाष्य ।

संप्रति भाष्ये बहुशस्साधून्यर्थान्तराणि दर्शयति ॥

नाचिकेतोपाख्यानमत्रैव तैत्तिरीयब्राह्मणे महाभारते (अनुशासन ११६) च दृश्यते । इत्थं हि तत्र श्रूयते—" उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश । स होवाच । तत कस्मै मां दास्यसीति । द्वितीयं तृतीयम् । तं ह परीत उवाच । मृत्यवे त्वा ददामीति । तँ ह स्मोत्थितं वागभिवदति । गौतम कुमारमिति । स होवाच । परेहि मृत्योर्गृहान् । मृत्यवे त्वाऽदामिति । तं वै प्रवसन्तं गन्तासीति होवाच । तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात् । स यदि त्वा पृच्छेत् । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रतिब्रूतात् । किं प्रथमां रात्रिमाश्ना इति । प्रजां त इति । किं द्वितीयामिति । पशूँस्त इति । किं तृतीयामिति । साधुकृत्यां त इति । तं वै प्रवसन्तं जगाम । तस्य ह तिस्रो रात्रीरनाश्वान् गृह उवास । तमागत्य पप्रच्छ । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रत्युवाच । किं प्रथमाँ रात्रिमाश्ना इति । प्रजां त इति । किं द्वितीयामिति । पशूँस्त इति । किं तृतीयामिति । साधुकृत्यां त इति । नमस्ते अस्तु

पा० श्रीः । कोशसंकेतः—(अडयार्) तालकोशः क. श्रीवेङ्कटेश्वर प्राच्यकोशागारस्थः;

कान्तौ' इत्यस्मात् शतरि 'ग्रहिज्ये'त्यादिना संप्रसारणम् । ह वै इति वृत्तार्थस्मरणार्थौ निपातौ । फलमिति शेषः । **वाजश्रवसः**—वाजेन अन्नेन दानादिकर्मभूतेन श्रवः

---

भगव इति होवाच । वरं वृणीष्वेति । पितरमेव जीवन्नयानीति । द्वितीयं वृणीष्वेति । इष्टापूर्तयोर्मेऽक्षितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै तस्येष्टापूर्ते नाक्षीयेते । नास्येष्टापूर्ते क्षीयेते योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपजितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै सोऽप पुनर्मृत्युमजयत्" ( तै. ब्रा. ३-११-८. ) इति । तत्र भारते तस्यान्यादृशत्वेऽपि अन्यद्द्वयमेकीकर्तुं शक्यम् ।

कुपितेन पित्रा मृत्यवे नचिकेतसः प्रदानपर्यन्तकथा, मृत्युसदने तिस्रो रात्रीरुपोषुषा नचिकेतसा वरत्रयलाभश्चोभयत्राविशिष्टौ । तत्र मध्ये अशरीरिण्या वाचा किञ्चिद्वचनम् , अपेक्षितकार्यसिद्ध्यै मृत्युगृहे त्रिरात्रमुपवासः कर्तव्य इति निश्चित्य मृत्युप्रवाससमयनिरीक्षणेन तत्र नचिकेतोगमनश्चाधिकम् । एवं समयनिरीक्षणेन गन्तव्यमिति पित्रोपदिष्टमिति वाक्यस्वारस्यदर्शिनी भट्टभास्करव्याख्या । अशरीरिवाचोपदिष्टमिति श्रुतिनिर्वाहपरं माधवार्यव्याख्यानम् । भास्करीयानुसरणे शान्तक्रोधेन पित्रा नचिकेतसः पुनःप्रतिनिवृत्तये एवमुपायोपदेश इति स्पष्टम् । अत्रापि, 'अनुपश्य यथा पूर्वे'इति मन्त्रभाष्यावतरणदर्शने पुत्रगमनशङ्कया निर्विण्णः पितेति ज्ञायत एव । माधवीयानुसारेऽपि पुत्र शास्त्रा निर्विण्णे पितरि वाक्सत्यतामभीप्सद्भिः कथयितुमशरीरिणी वाक् प्रादुर्बभूवेति सुवचम् । ननु उपरि वीतमन्युत्वादिवरणात् क्रोधो न शान्त इति ज्ञायत इति **अनुपश्येति** मन्त्रस्यान्यथागतिरस्तु, मृत्युसदनं गन्तुमनिच्छन्तं पुत्रं प्रति पितुर्वचनमिदमिति वा अशरीरिवाग्वचनमिति चेति चेन्न, पितृकृत्स्नाद्गुण्यपरस्य पितरमनर्थाद्रक्षितुमेवोद्युक्तस्य पुत्रस्य पितृवचनभञ्जकनिर्वेदकल्पनस्यानुचितत्वात् । अतोऽस्य पुत्रं प्रति कथनरूपत्वं न युक्तमिति अशरीरिवाचो वा पुत्रस्य वा वचनमिदमित्येव वक्तव्यम् । तत्र पुत्रकर्तृकं वचनमित्युक्तौ तस्योत्साहः आत्मजिज्ञासोपयुक्तगुणवत्त्वं च सिद्ध्यतीति भाष्यदृष्टा सरणिरेव ज्यायसी । एवं च पितुः स्वयमेव वीतमन्युत्वेऽपि पुनर्वीतमन्युत्ववरणम् , ऋजुरप्ययं पुत्रः कदाचित् परकृतक्षोभवशाद्यमसदनमप्राप्य निवृत्तस्यादिति स्ववागसत्यत्वापत्त्यादिशङ्कया पितुस्सहसा मन्युसंभावनया कृतमिति सुवचम् ॥

तथाचात्र कथासारः- वाजश्रवसेन सर्वस्वदक्षिणयज्ञकरणम् , जरद्गवीप्रदस्य पितुः क्रतोस्साद्गुण्याय पुत्रेण स्वात्मनोऽपि प्रदाननिर्बन्धनम् , पित्रा मृत्यवे त्वा ददामीति वचनम् , अशरीरिवाक्प्रादुर्भावः, पितृनिर्वेदसमाधानम् , पुत्रप्रतिनिवृत्त्यौपयिकगमनप्रकारोपदेशः, तथा गमनम् , मृत्युना त्रिरात्रोपवासिने वरत्रयदानम् , पितृसौमनस्यनाचिकेताग्निमोक्षतत्स्वरूपवरत्रयवरणमिति ॥ अत्र ब्रह्मविद्याग्रहणेन शाश्वतगुरुशिष्यभावसंबन्धसंपादनात् पुनरागतेऽपि पुत्रे मृत्योस्त प्रति स्वामित्वं न लोपितमिति न दत्तापहार इति ध्येयम् ॥

महाभारते तु कथैवम्—औद्दालकिना दीक्षामसमाप्य स्वपुत्रं नाचिकेतं ( न तु नचिकेतसं ) प्रति नदीतीरात्स्वनिक्षिप्तदर्भपुष्पाद्यानयनकथनम् , नाचिकेतेन, 'तत्र तन्न पश्यामी'त्युक्तिः, क्षुत्पिपासोपहतेन पित्रा यमं पश्येति शापः, नाचिकेतस्य साञ्जलिबन्धं गतसत्त्वस्य भुवि पतनम् , पितूरोदनम् , पुत्रेण यमलोके यमदर्शनम् , पित्रा पश्येत्येवोक्तत्वाद्दर्शनस्य निष्पन्नतया यमेन पुनर्निवर्तनम् , तदा नाचिकेतं प्रति तत्प्रार्थनया गोप्रदायिजनभोगस्थानादिप्रदर्शनेन गोदानप्रभाववर्णनम् , सुप्तप्रबुद्धेनेव समुत्थितेन पुत्रेण पितृसमाधानपूर्वं स्वानुभूतविभववर्णनमिति ॥ एवं ब्राह्मणैकरस्यप्रदर्शनायैव प्रथमम्यामप्यस्यामुपनिषदि ब्राह्मणवाक्यैरुपक्रम आदृत इति ॥

१. उशन्निति वाजश्रवसस्य नामधेयम् , श्रुतिषु तत्तन्नाम तत्तत्कुलपूर्वपुरुषनामोभयनिर्देशेन तत्तत्कीर्तनस्यैव सर्वत्र दर्शनादिति यद्यपि सुवचम् । भट्टभास्करभाष्यमप्यत्रानुकूलमिव — अथापि

---

लिखितपत्रात्मकः प्राचीनः **ख.** मुद्रित आन्ध्र-ग्रन्थ लिपिकोशाः **ग.** पूना आनन्दाश्रममुद्रितः **घ.** । विस्तर-

**तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥**
**तँ ह कुमारँ सन्तं दक्षिणासु नीयमानासु श्रद्धा[1]ऽऽविवेश ।**
**सोऽमन्यत[2](?) ॥ २ ॥**

कीर्तिः यस्य स वाजश्रवाः । तस्यापत्यं वाजश्रवसः । रूढिर्वा वाजश्रवसः (वा: ') इति । स किल ऋषिः विश्वजिता सर्वस्वदक्षिणेन यजमानः तस्मिन् क्रतौ **सर्ववेदसं**—सर्वस्वं **ददौ**—दत्तवानित्यर्थः । उशन्नित्यनेन कर्मणः काम्यत्वाद्दक्षिणामाद्गुण्यमावश्यकमिति सूच्यते ॥

**तस्य ह नचिकेता नाम पुत्र आस** । आस—बभूव । 'छन्दस्युभयथा' इति लिटस्सार्वधातुकत्वात् 'स्वस्तये ताक्ष्र्यम्' इत्यादिवत् अस्तेर्भूभावाभावः । **तँह कुमारँसन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश** । तं— नचिकेतसम्, **कुमारं सन्तम्**—बालमेव सन्तम्, ऋत्विग्भ्यो दक्षिणासु गोषु नीयमानासु सतीषु **श्रद्धा**—आस्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ता **आविवेश**—आविष्टवती ॥

यद्यपि यत आनतिकरं द्रव्यम्, तद् दक्षिणेत्युच्यते । एका चासौ क्रतावानतिरिति तदुपाधिको दक्षिणाशब्दः एकवचनान्ततामेव लभते । अत एव भृतामकैकाहक्रतौ 'तस्य धेनुर्दक्षिणा' इत्यत्र कृत्स्नस्य गवाश्वादेः प्राकृतस्य दाक्षिण्यस्य निवृत्तिरिति 'तस्य धेनुरिति गवाम्' इति दाशमिकाधिकरणे स्थितम्—तथापि दक्षिणाशब्दोऽयं भृतिवचनः । स च कर्मापेक्षयापि प्रवर्तते, अस्मिन् कर्मण्ययं भृतिरिति । कर्तुरपेक्षयापि प्रवर्तते, अस्मिन् कर्मणि अस्य पुरुषस्येयं भृतिरिति । ततश्च ऋत्विग्बहुत्वापेक्षया दक्षिणाबहुत्वसंभवात् **दक्षिणास्विति** बहुवचनमुपपद्यते । अत एव क्रतपेये 'औदुम्बरस्सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः' इत्यत्र एकवाक्यतापक्षे ब्रह्मभागमात्रेपि दक्षिणाशब्दस्यावयवलक्षणामन्तरेण मुख्यत्वोपपत्तेस्तन्मात्रबाध इत्युक्तं दशमे, 'यदि तु ब्रह्मणस्तदूनं तद्विकारस्स्यात्' इत्यधिकरणे ।

शत्रन्तस्यास्य नामत्वापेक्षया यौगिकत्वे, क्रियमाणस्य कर्मणः काम्यत्वासिद्धया नचिकेतसः क्रतुसाद्गुण्यनैर्मर्थमुचितमिति द्योत्यत इति यथाशाङ्करमेव व्याख्यातम् ॥ 'औद्दालकिरारुणि' रित्युपरि नामान्तरदर्शनात् वाजश्रवा इति यौगिकमित्यभिप्रायेण व्युत्पादयति वाजेनेति । 'रूढिर्वा वाजश्रवस इती'ति पाठो दृश्यते । शाङ्करे तु वाजश्रवा इति रूढिः, तत्पुत्रो वाजश्रवस इति । एतद्ध स्म वै तद्विद्वांसो वाजश्रवसा गौतमाः (तै. ब्रा. ३-११·८) इति बहूनां वाजश्रवसत्वकथनाच्च वाजश्रवसपदं रूढम्, किन्तु वाजश्रवःपदमित्येवौचित्यसिद्धमपि । तस्माद्रूढिर्वा वाजश्रवा इतीति पाठस्स्यात् । अन्यथा पुनः — रूढत्वे कल्प्ये वाजश्रवस इत्यस्यैव वर्णसमुदायस्य रूढत्वे को दोषः? एवंच तत्पितुः उद्दालक इति वक्ष्यमाणं नाम भविष्यति । वाजश्रवसा इति बहुवचनं तु वाजश्रवसगोत्रजानामपि वाजश्रवसत्वादित्याशयो वर्णनीयः । सर्वं वेदो धनं **सर्ववेदसम्** । 'अनसन्तान्नपुंसकाच्छन्दसी'ति तत्पुरुषात् टच् ।

मिया विस्पष्टाशुद्धांशान् उपेक्ष्य कतिपयपाठभेदमात्रं प्रदर्श्यते ।

1. विवेशेति आङ्रहितपाठः शाङ्. माध्व । 2. सोमन्यतेति माध्वे नास्ति ।

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ॥ ३ ॥
स होवाच पितरं तत कस्मै मां दा[1]स्यसीति ।
द्वितीयं तृतीयम् । तँ होवाच मृत्यवे त्वा ददा[2]मीति ॥ ४ ॥
बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
किँ स्वित् यमस्य कर्तव्यं यन्मयाऽद्य करिष्यति ॥ ५ ॥

ततश्च क्रत्वपेक्षया दक्षिणैक्येपि ऋत्विगपेक्षया दक्षिणाभेदसंभवात् **दक्षिणा**स्विति बहुवचनस्य नानुपपत्तिरिति द्रष्टव्यम् ॥

श्रद्धाप्रकारमेव दर्शयति—(**सोऽमन्यत**?) **पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । अनन्दा नाम ते लोकास्तान स गच्छति ता ददत्** । पीतमुदकं याभिस्ताः **पीतोदकाः**, जग्धं भक्षितं तृणं याभिस्ताः **जग्धतृणाः**, दुग्धः दोहः क्षीराख्यो यासु (भिः)ताः **दुग्धदोहाः**, **निरिन्द्रियाः**—अप्रजननसमर्थाः । जीर्णा निष्फलाइति यावत् । या एवंभूता गावः, ताः ऋत्विग्भ्यो दक्षिणाबुद्ध्या **ददत्**—प्रयच्छन्, **अनन्दाः**—असुखाः **ते**-शास्त्रसिद्धा **लोकाः** सन्ति **नाम**-खलु, तान् **स** यजमानो गच्छति । एवममन्यतेत्यर्थः ॥ ३ ॥

**स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयम् ।** दीयमानदक्षिणावैगुण्यं मन्यमानः नचिकेताः स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छन् आस्तिकाग्रेसरः पितरमुपगम्योवाच—**तत**—हे तात । कस्मै ऋत्विजे दक्षिणार्थं मां दास्यसीति । [3]स एवमुक्तेनापि पित्रा उपेक्ष्यमाणोपि द्वितीयं तृतीयमपि पर्यायं कस्मै मां दास्यसीत्युवाच । **तँहोवाच मृत्यवे त्वा ददामीति** । एवं बहु (मुहुः) निर्बध्यमानः पिता कुपितः **तं** पुत्रम्, **मृत्यवे त्वा ददामी**त्युक्तवान् ॥ ४ ॥

एवमुक्तोपि पुत्रः विगतसाध्वसशोकः पितरमुवाच- **बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।** सर्वेषां मृत्युसदनगन्तॄणां पुरतो मध्ये वा गच्छामि, न तु मन्थरः [4]पश्चात् । मृत्युसदनगमने न कोपि मम विचार इति भावः । किं तर्हीत्यत्राह—**किँस्विद्यमस्य**

३. पीतोदका इत्यादौ क्तप्रत्ययेन भूतकालवाचिना इदानीं पानादि न कुर्वन्तीति ज्ञापनादत्यन्तजरठत्वाशक्तत्वलाभः । इमा गाव इत्यध्याहार्यम् । ता इत्यत्र गा इति पाठः स्यान्नवेति विमृश्यम् ।

५. प्रथम एमि मध्यम एमीत्यत्र मुख्यया शिष्यवृत्त्या मध्यमया वा पितृसविधे गच्छामि, न त्वधमया । तादृशं मां नूनं क्रोधावेश एवमुक्तवानिति क्रियार्थदर्शनमुपेक्ष्य, यमसदनं प्रति प्रथमो मध्यमो वा गच्छामीति उत्साहसूचकमृजुमर्थमाह – **एवमुक्त** इत्यादिना । विवक्षिता हि दासेन स्वामिनिदेशमप्रतीक्ष्य तदभिमतमभ्यूह्य किंकरणं भाव्यम् । अत इहैव विचारयन् पृच्छति **किँ स्विदि**त्यादि ।

1. दास्यति माध्व? 2. ददानि माध्व. 3. 'स' इति ख. कोशे । 4. अयं घ. पाठः, न तु पश्चात् ग.

अनुपश्य यथा पूर्वे प्रतिपश्य तथा(ऽ)परे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ॥ ६ ॥
वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैताँ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥
आशाप्रतीक्षे सङ्गतँ सूनृताञ्च इष्टापूर्ते पुत्रपशूँश्च सर्वान् ।
एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ८ ॥

**कर्तव्यं यन्मयाद्य करिष्यति ।** मृत्युर्यदद्य मया करिष्यति, तत्तादृशं यमस्य कर्तव्यं किं वा ? पूर्णकामस्य मृत्योः मादृशेन बालिशेन किं प्रयोजनं स्यात् ? येन ऋत्विग्भ्य इव तस्मै मदर्पणं सफलं स्यात् । [1] अत एतदेवानुशोचामीति भावः ॥ ५ ॥

साध्वसरोषावेशर्हानमीदृशं पुत्रवाक्यं [2] श्रुत्वा ' क्रोधावेशात् मया मृत्यवे त्वां ददामीत्युक्तम् । नेदृशं पुत्रं मृत्यवे दातुमुत्सहे ' इति पश्चात्तप्तहृदयं पितरमालोक्योवाच—**अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे ।** पितामहादयः यथा मृषावादं विनैव स्थिताः, यथा चापरे साधवोऽद्यापि तिष्ठन्ति, तानन्वीक्ष्य [3] तथा वर्तितव्यमिति भावः । **सस्यमिव मर्त्यः पच्यते सस्यमिवाऽऽजायते पुनः ।** मर्त्यस्सस्यमिवाल्पेनापि कालेन जीर्यति । जीर्णश्च मृत्वा सस्यमिव पुनराजायते । एवमनित्ये जीवलोके किं मृषाकरणेन ? पालय सत्यम्; प्रेषय मां मृत्यव इति भावः ॥ ६ ॥

एवमुक्त्वा प्रेषितः प्रोषितस्य मृत्योर्द्वारि तिस्रो रात्रीरनश्नन्नुवास । ततः प्रोष्य आगतं यमं द्वास्थाः वृद्धा ऊचुः—**वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैतांशान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥** साक्षादग्निरेव अतिथिर्ब्राह्मणस्सन् गृहान् प्रविशति । तस्याग्नेरेतां पाद्यासनदानादिलक्षणां शान्तिं कुर्वन्ति सन्तः, ' तदपचारेण दग्धा मा भूम ' इति । अतः हे वैवस्वत ! नचिकेतसे पाद्यार्थमुदकं **हर** आहरेत्यर्थः ॥ ७ ॥

अकरणे प्रत्यवायं च दर्शयन्ति स्म—**आशाप्रतीक्षे सङ्गतंसूनृतांश्चेष्टापूर्ते पुत्रपशूंश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे । यस्य अल्पमेधसः**—अल्पप्रज्ञस्य **पुरुषस्य गृहे अनश्नन्**—अभुञ्जानः

६. अत्र वक्तव्यं टिप्पण्युपक्रम एवोक्तम् ।

७. ' एवमुक्त्वा प्रेषित ' इत्यत्र उक्तिप्रेषणयोः समानकर्तृकत्वाभावात् एवमुक्त्या प्रेषित इति पाठस्स्यादित्यालोचितम् । न्यायरक्षामणावपि ईदृशवाक्यस्यैव दर्शनात् उक्तेत्यस्यैव अनश्नन्नुवासेत्यत्रान्वयेन निर्वाहो भाव्यः । **अनश्नन्नि**त्यनेन, मृत्युप्रवासकाले तदितरैः प्रार्थितोऽपि नाशनादिति ज्ञाप्यते । **हरे**त्यस्य अपहरेति नार्थ इति ज्ञापनाय आहरेत्युक्तम् । नयेति वा आनयेति वाऽर्थ इति भावः ।

1. जायते. माध्व । आवृत्त जन्मेति आङ्पूर्वकजनेरर्थः । 2. अत एव तदेव ख.
3. ईदृशपुत्रवाक्यं. ग. 4. घ. तान् वीक्ष्य ।

**तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः ।**
**नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्व ॥ ९ ॥**
**शान्तसङ्कल्पस्सुमना यथा स्याद्वीतमन्युर्गौतमो माऽभि मृत्यो ।**

अतिथिर्वसति, तस्य **अशाप्रतीक्षे**— कामसङ्कल्पौ । यद्वा अनुत्पन्नवस्तुविषयेच्छा **आशा** । उत्पन्नवस्तुप्रार्थनेच्छा **प्रतीक्षा** । **सङ्गतम्**—सत्सङ्गमम् । **सूनृताम्**- सत्यप्रियवाचम् । **इष्टापूर्ते** — इष्टं यागादि, पूर्तं खातादि । पुत्रान् पशूंश्च, **एतत्**—अनशनरूपं पापं **वृङ्क्ते**— वर्जयति नाशयतीत्यर्थः । **वृजी** वर्जने । रुधादित्वात् श्नम् ।[1] वृजि वर्जने इत्यस्माद्धातोर्वा इदितो नुम् । अदादित्वात् शपो लुक् ॥ ८ ॥

एवं वृद्धैरुक्तो मृत्युः नचिकेतसमुवाच - **तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन् अतिथिर्नमस्यः ।** मे गृहे यस्माद्धेतोः हे ब्रह्मन्! नमस्कारार्होऽतिथिस्त्वं तिस्रो रात्रीरभुञ्जान एव अवात्सीरित्यर्थः । **नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु ।** स्पष्टोऽर्थः । **तस्मात्प्रति त्रीन् वरान् वृणीष्व** । तस्माद्धेतोः, मह्यं स्वस्ति यथा स्यादित्येवमर्थं[2] त्रीन् वरान् **प्रति**- [3]उद्दिश्य **वृणीष्व** प्रार्थयस्व[4] । तव लिप्साभावेऽपि मदनुग्रहार्थमनशनरात्रिसमसंख्याकान् त्रीन् वरान् वृणीष्वेति भावः(त्यर्थः) ॥ ९ ॥

एवं प्रार्थितो नचिकेतास्त्वाह— **शान्तसङ्कल्पस्सुमना यथा स्याद्वीतमन्युर्गौत-**

८. **वृजि** इति । व्याख्यायेनात्मनेपदनिर्वाहे त्वदादिधातुर्गृहीतः । तस्य ईदित्त्ववत् इदित्त्वमप्यनुमतमिति इदन्ततया ग्रहणम् । तदादरणफलं दर्शयति **इदितो नुमिति** ॥

९. अत्र, प्रति उद्दिश्य वृणीष्व प्रार्थयस्व इत्येव ताल-पत्रपाठ , न तु प्रार्थयेति, न वा **प्रति** तानुद्दिश्येति पूनामुद्रितवत् । अत्र वरान् वृणीष्वेति श्रुत्यनुसारात्, उपरि निष्कृष्यार्थवर्णनानुरोधाच्च वरानित्यस्य वृणीष्वेत्यत्रैवान्वयः । **प्रति** इत्यस्य प्रतिनिधितयेत्यर्थे पूर्वं 'वृङ्क्ते' इत्युक्तवर्जनप्रतिनिधितयेत्यर्थः । प्रत्यनीकतयेत्यर्थे रात्रित्रयातिक्रमदोषपरिहारार्थमिति यावत् । रात्रित्रयापादितानिष्टत्रयपरिहारप्रत्युपकारभूतान् वरानिति वाऽर्थः । तत्प्रतिविधानप्रवृत्त' इति श्रीभाष्यानुसारात् रात्रित्रयोपवासप्रतिकारभूतान् वरानिति वाऽर्थः । सर्वाभिप्रायेण **प्रति उद्दिश्येति** सामान्येन उक्तम् । उपवासरात्रित्रित्वमुद्दिश्य, आशाप्रतीक्षादिवर्जनाभावमुद्दिश्य, स्वस्तिभावमुद्दिश्येत्येवं कोऽप्यर्थो भविष्यतीति । अत्र प्रद्युम्नः कृष्णात् प्रति इतिवत् '**तस्मात् प्रती**'त्यस्य उपवासविशिष्टात्मप्रतिनिधिभूतानित्यर्थे वराणां तत्स्थानापन्नत्वरूपतत्प्रतिनिधित्वं दुरुपपादम् । वराणां तदापादितानिष्टपरिहारकतया तत्प्रतिकारभूतत्वात् । वरवरणमाशाप्रतीक्षादिवर्जनप्रतिनिधितया कर्तव्यमित्यर्थ इति चेत्—तर्हि तस्मादित्यस्य वर्जनार्थकत्वे, पूर्वम् अवात्सीरिति यत् तस्मादिति यच्छब्दप्रतिनिर्देशता तस्मादित्यस्य न स्यात् । यत् इत्यस्य यादृशवर्जनाद्धेतोरित्यर्थवर्णनं क्लिष्टम्, तस्य नचिकेतउद्दिष्टमुख्यफलत्वाभावात् । इष्टफलस्यैव यत्तच्छब्दाभ्यां हेतुत्वेन कथनं युक्तम् । एवं यस्माद्धेतोरेवं वासः कृतः तस्माद्धेतोरित्यस्य वासस्यैवं कृतत्वाद्धेतोरित्यत्रैव पर्यवसानमित्यपि सुवचम् । एवमेव बहुलं प्रयोगदर्शनात् । अतः प्रतियोगे पञ्चमीत्यनङ्गीकृत्य हेतुपञ्चमी आदृतेति भाति ।

1. अयं घ. पाठः । ख. कोशे अदादित्वाद्रिति वाकारोऽधिकः । ग. वृजवर्जने इत्यस्माद्धातोर्वाऽदादित्वाच्छपो लुक् । 2. एतदर्थं ख. 3. प्रति तानुद्दिश्य. घ. 4. प्रार्थयस्व क.ख. अन्यत्र 'प्रार्थय' इति ।

त्वत्प्रसृष्टं माऽभिवदेत् प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे ॥ १० ॥
यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखं रात्रीश्शयिता वीतमन्युस्त्वां(?) ददृशिवान् मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥
स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति ।

**मो माऽभि मृत्यो ।** हे मृत्यो! मत्पुत्रो यमं प्राप्य किं करिष्यतीति मद्विषयचिन्तारहितः प्रसन्नमनाः **माऽभि**—मां प्रति मम पिता गौतमः **वीतमन्युः** वीतरोषश्च यथा स्यादित्यर्थः । किञ्च **त्वत्प्रसृष्टं माऽभिवदेत् प्रतीतः** । त्वया गृहाय प्रेषितं **मा अभि–मां** प्रति **प्रतीतः** – यथापूर्वं प्रीतस्सन् वदेत् । यद्वा **अभिवदेत्** आशिषं प्रयुञ्जीत[3] । 'अभिवदति नाभिवादयत' इति स्मृतिषु अभिवदनस्य आशीर्वादे प्रयोगात् । **एतत् त्रयाणां प्रथमं वरं वृणे**—स्पष्टोऽर्थः ॥ १० ॥

एवमुक्तो मृत्युः प्रत्युवाच—**यथा पुरस्ताद्भविता प्रतीतः ।** यथापूर्वं त्वयि हृष्टो भविता । **औद्दालकिरारुणिर्मत्प्रसृष्टः ।** उद्दालक एव औद्दालकिः । अरुणस्य अपत्यं आरुणिः । द्व्यामुष्यायणो वा । उद्दालकस्यापत्यम् अरुणस्य गोत्रापत्यमिति वाऽर्थः । **मत्प्रसृष्टः** - मदनुज्ञातः मदनुगृहीतस्सन् । मदनुग्रहादित्यर्थः । **सुखꣳ रात्रीश्शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम्**—त्वयि विगतमन्युस्सन् उत्तरा अपि रात्रीस्सुखं शयिता । लुट् । सुखनिद्रां प्राप्स्यतीति यावत् । **ददृशिवान्** (?)[4] दृष्टवान् सन्नित्यर्थः । क्वसन्तोऽयं शब्दः । 'दृशेश्चेति वक्तव्य'मिति क्वसोरिट् । छान्दसो द्विर्वचनाभावः । **मत्प्रसृष्टम्** इति द्वितीयान्तपाठे मत्प्रेषितं त्वामिति योजना ॥ ११ ॥

नचिकेता वरं द्वितीयं प्रार्थयते–'स्वर्गे लोक' इत्यादिना मन्त्रद्वयेन । **स्वर्गे लोके न भयं किञ्चनास्ति** । अत्र स्वर्गशब्दो मोक्षस्थानपरः । यथा चैतत् तथोत्तरत्र वक्ष्यते ।

१०. नायं यमसदनमगत्वा वा यमेनाननुज्ञातो वा निवृत्त । किन्तु तत्प्रसृष्ट एव समागत इति प्रत्यया-धीनो हर्षः **प्रतीत**पदेन गम्यते । 'स्याते हृष्टे प्रतीतः' इत्यमरः । अत्र 'यथा पुरस्ताद्भविता प्रतीत' इत्युत्तरमन्त्रे प्रीत इत्यर्थ एव स्वरस इतीहापि तथैव सूचयितुं यथापूर्वमिति 'यथा पुरस्ता'दिति पदार्थोक्तिः ।

११. 'उद्दालक आरुणि' रिति तत्रतत्र (छा. ५, बृ. ५–७, ८–३.) दर्शनात् अरुणगोत्रापत्ये च आरुणय इति प्रयोगस्य श्वेतकेतौ दर्शनात् उद्दालकपुत्र इत्यर्थमविवक्षन्नाह–**उद्दालक एवेति । द्व्यामुष्यायण** इति । अमुष्य प्रख्यातस्यापत्यमामुष्यायणः । स एव पुत्रिकापुत्रत्वादिना द्वयोस्सम्बन्धी चेत्, द्व्यामुष्यायणः ॥ छन्दसीरः' (८-२-१५) इति सूत्रात् मतोर्मस्य वत्वादिति ददृशिवानित्यस्य दृशिमानित्यर्थ-वर्णने त्वामिति द्वितीया न स्यादित्यन्यथा व्याचष्टे **क्वसन्त** इति ॥

1. ददृशिवान् शाङ्क. माध्व । दर्शिवान् पुनामुद्रणं भाष्यतालकोशानुरोधि । 2. मत्पुत्रोऽयं मामप्राप्य- **ख.** 3. अयं **क. ख.** पाठः । अन्यत्र 'प्रयुञ्ज्यात्' । 4. ददृशिवान् **ग.** अन्यत्र सर्वत्र 'दर्शिवान्' ।

उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥
स त्वमग्निँ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तँ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद् द्वितीयेन वृणे वरेण ॥ १३ ॥
प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥ १४ ॥

**न तत्र त्वम्, न जरया बिभेति ।** हे मृत्यो! त्वं तत्र न प्रभवसि । जरायुक्तस्सन् बिभेति जरातो न बिभेति । तत्र वर्तमानः पुरुष इति शेषः । **उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ।** **अशनाया**—बुभुक्षा । अत्रापि स्वर्गशब्दो मोक्षस्थानपरः ॥ १२ ॥

**स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो ।** पुराणादिप्रसिद्धसार्वज्ञ्यस्त्वं स्वर्गप्रयोजनकमग्निं जानासि । 'स्वर्गादिभ्यो यद्वक्तव्यः' इति प्रयोजनमित्यर्थे यत् । स्थण्डिलरूपाग्नेः स्वर्गप्रयोजनकत्वं च उपासनाद्वारेति उत्तरत्र स्फुटम् । **प्रब्रूहि तं श्रद्दधानाय मह्यम् । श्रद्दधानाय**—मोक्षश्रद्धावते । स्वर्गलोकेन तव किं सिद्ध्यतीत्यत्राह—**स्वर्गलोका अमृतत्वं भजन्ते ।** स्वर्गो लोको येषां ते । परमपदं प्राप्ता इत्यर्थः । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकत्वात् स्वरूपाविर्भावलक्षणमोक्षशब्दितामृतत्वस्येति भावः । **एतद्द्वितीयेन वृणे वरेण ।** स्पष्टम् ॥ १३ ॥

एवमुक्तो मृत्युराह[1]—**प्र ते ब्रवीमि तदु मे निबोध ।** प्रार्थितवते[2] तुभ्यं **प्रब्रवीमि ।** 'व्यवहिताश्च' इति व्यवहितप्रयोगः । **मे** मम उपदेशाज्जानीहीत्यर्थः । ज्ञानस्य फलं दर्शयति —**स्वर्ग्यमग्निं नचिकेतः प्रजानन् अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् । अनन्तस्य** विष्णोः लोकः तत्प्राप्तिम् । 'तद्विष्णोः परमं पद' मित्युत्तरत्र वक्ष्यमाणत्वात् । **अथो**—तत्प्राप्त्यनन्तरं **प्रतिष्ठाम्**—अपुनरावृत्तिं च । लभत इति शेषः । तद्ज्ञानस्येदृशसामर्थ्यं कथं संभवतीति मन्यमानं प्रत्याह—**विद्धि त्वमेतं निहितं गुहायाम् ।** ब्रह्मोपासनाङ्गतया एतद्ज्ञानस्य मोक्षहेतुत्वलक्षणमेतत्स्वरूपं गुहायां निहितमन्ये न जानन्ति । त्वं जानीहीति भावः । यद्वा ज्ञानार्थकस्य विदेर्लाभार्थकत्वसंभवात् अग्निं प्रजानंस्त्वमनन्तलोकाप्तिं प्रतिष्ठां लभस्वेत्युक्ते हेतुहेतुमद्भावस्सिद्धो भवति । **प्रजानन्**, 'लक्षणहेत्वोः—' इति शतृप्रत्ययः ॥ १४ ॥

१२. अग्निं वक्ष्यमाणः तत्फलत्वेन स्वाभिमतं स्वर्गं प्राकृतस्वर्गाद्व्यावर्तयति स्वर्गे इति मन्त्रेण । **वक्ष्यते** - १९ मन्त्रे विशेषचर्चायाम् ।

१४. **लाभार्थे**ति । **विद्धि** अनुभवेत्युक्तो लाभ एवोक्तो भवतीति । लभत इत्याद्याहारे गौरवादेतत्पक्षावलम्बनम् । एवञ्च एतादिति पदच्छेदमकृत्वा एतमिति कृत्वा गुहानिहितं तदात्मरूपमग्निं प्रजानन्नित्यन्वयोऽपि काममस्तु । प्रज्ञानञ्चोपासनं स्यात ॥

1. मृत्युः प्राह **ख. घ.** 2. तत्प्रार्थितं ते. **ख. ध.**

लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ।
स चापि तत् प्रत्यवदद्यथोक्तमथास्य मृत्युः[1] पुनराह तुष्टः ॥ १५ ॥
तमब्रवीत् प्रीयमाणो महात्मा वरं तवेहाद्य ददानि[2](मि) भूयः ।
तवैव नाम्ना भविताऽयमग्निः सृङ्कांचेमामनेकरूपां गृहाण ॥ १६ ॥
त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू ।

अनन्तरं श्रुतिवाक्यम् **लोकादिमग्निं तमुवाच तस्मै** । लोकस्य **आदिं** हेतुम् ; स्वर्ग्यमिति यावत् । तमग्निमुवाच । **या इष्टका यावतीर्वा यथा वा** । यल्लक्षणा इष्टकाश्चेतव्याः, यत्संख्याकाः, येन प्रकारेण चेतव्याः—तत्सर्वमुक्तवानित्यर्थः । यावतीरिति पूर्वसवर्णश्छान्दसः । **स चापि तत् प्रत्यवदद्यथोक्तम्** । स च नचिकेताः **तत्**[4] उक्तं ( श्रुतं ) सर्वं तथैवानूदितवानित्यर्थः । **अथास्य मृत्युः पुनराह तुष्टः** । शिष्यस्य ग्रहणसामर्थ्यदर्शनेन संतुष्टस्सन् मृत्युः पुनरप्युक्तवानित्यर्थः ॥ १५ ॥

**तमब्रवीत् प्रीयमाणो महात्मा** । सन्तुष्यन्[5] महामना मृत्युः नचिकेतसमब्रवीत् । **वरं तवेहाद्य ददानि(मि) भूयः** । पुनश्चतुर्थं वरं ददानि[6] = प्रयच्छानीति (वरं प्रयच्छामीति) । किंतत्[7] तत्राह– **तवैव नाम्ना भविताऽयमग्निः** । मयोच्यमानोऽग्निस्तवैव नाम्ना 'नाचिकेतः' इति प्रसिद्धो भविता । किञ्च **सृङ्कां चेमामनेकरूपां गृहाण** विचित्रां **सृङ्कां** शब्दवतीं रत्नमालां स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्म स्तौति—**त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू । त्रिणाचिकेतः**—'अयं वाव यः पवते' इत्याद्यनुवाकत्रयाध्यायी । **त्रिकर्मकृत्**—यजनाध्ययनदानकृत् पाकयज्ञहविर्यज्ञसोमयज्ञकृद्वा **त्रिभिः**[8] अग्निभिः त्रिरनुष्ठितैरग्निभिः

१५. **यावती**रिति यावत्य इत्यर्थः । **वा**कारस्समुच्चये ॥

१६. सृङ्काशब्दनिष्पत्तिर्विचार्या । सृकिधातोर्गत्यर्थात् सृङ्केति रूपं निष्पद्यते । अत्र शाङ्करे गत्यर्थोऽप्युक्तः । इहापि २-३. मन्त्रे वक्ष्यते । शाङ्करे अत्र मन्त्रे अकुत्सितेति, तत्र च कुत्सितेति गतिविशेषणमौचित्यात् स्वयं पूरितम् । न तु सृङ्काशब्दार्थः । मिथो विरोधप्रसङ्गात् । ब्रह्मविद्याभरणे सृङ्केति क्वचिन्मुद्रितम् । रत्नमालारूपार्थे सृङ्केति सृङित्यनुकरणशब्दग्रहणेन सृङिति कायति शब्दं करोतीति कथंचित् व्युत्पत्त्या स्याद्वा, अन्यथा वेति विमृश्यम् । गत्यर्थकत्वपक्षेऽपि आर्द्रस्निग्ध (शैवलित) देशाऽऽपतितन्यस्यमानपदाकर्षणं सृङित्यनुकारार्हमिति तादृशी गतिः सृङ्का (சறுக்கல்) स्यात्; 'सुषु' इत्यनुकरणमूलक सुषुम्नापदवत् । रत्नमालापक्षे शब्दवतीति विशेषणमपि दत्तं भाष्ये ।

१७. **त्र्याध्यायी**ति । अयं भावः **त्रिणाचिकेत**पदस्य त्रिर्नाचिकेताग्निचयनकर्तेत्यर्थस्वीकारे उत्तरमन्त्रे य एवं विद्वांश्चिनुत इति त्रिणाचिकेतपदेन सह प्रयोगोऽनुपपन्नः । त्रयमेतद्विदित्वा य एवं

1. पुनरेवाह शाङ्क । 2. 'ददानि' इति ख. ग. भाष्यकोशानुरोधि । 3. शङ्काम् माध्व । 4. श्रुतं घ. ग. 5. तं तुष्यन् ख. संतुष्य ग. संतुष्यन् घ. 6. ददानि .. ..प्रयच्छानिख.ग. 7. कर्मप्रस्तौति ग. 8. त्रिभिरग्निभिस्त्रिः क. ख. त्रिभिरग्निभिः त्रिभिः घ. त्रिभिस्त्रिः ग.

2

ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमाँ शान्तिमत्यन्तमेति ॥ १७ ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम् ।
स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥

**सन्धिम्**—परमात्मोपासनेन संबन्धम् **एत्य**—प्राप्य जन्ममृत्यू तरतीत्यर्थः, 'करोति तद्येन पुनर्न जायते' इत्यनेनैकार्थ्यात् । एवमेव ह्ययं मन्त्रः 'त्रयाणामेव चैवम्'-इति सूत्रे व्यासार्यैर्विवृतः । त्रिभिरेत्य संधिमिति निर्दिष्टमङ्गिभूतं परमात्मोपासनमाह—**ब्रह्मजज्ञं देवमीड्यं विदित्वा** । अयं मन्त्रखण्डः, 'विशेषणाच्चे'ति सूत्रभाष्ये, "ब्रह्मजज्ञः—जीवः । ब्रह्मणो जातत्वात् ज्ञत्वाच्च । तं देवमीड्यं विदित्वा = जीवात्मानमुपासकं ब्रह्मात्मकत्वेनाव-गम्येत्यर्थः" इति विवृतः । देवशब्दस्य परमात्मवाचितया जीवपरयोश्चैक्यासंभवादत्रत्य-देवशब्दस्य परमात्मात्मकत्वपर्यन्तोऽर्थ इति भाष्याभिप्रायः । **निचाय्येमाँ शान्तिमत्यन्त-मेति** । **निचाय्य**— ब्रह्मात्मकं स्वात्मानं साक्षात्कृत्य । **इमां**—'त्रिकर्मकृत्तरती'ति पूर्व-मन्त्रनिर्दिष्टां संसाररूपानर्थशान्तिमेतीत्यर्थः[1] ॥ १७ ॥

**त्रिणाचिकेतस्त्रयमेतद्विदित्वा** । **त्रिणाचिकेतः** उक्तोऽर्थः । **त्रयमेतत् विदित्वा**(?) 'ब्रह्मजज्ञं देवमीड्य'मिति मन्त्रनिर्दिष्टं ब्रह्मस्वरूपं तदात्मकस्वात्मस्वरूपं 'त्रिभिरेत्य संधि'मिति निर्दिष्टमग्निस्वरूपं च **विदित्वा** गुरूपदेशेन शास्त्रतो वा ज्ञात्वा । **य एवं विद्वाँश्चिनुते नाचिकेतम्** । एतादृशार्थत्रयानुसंधानपूर्वकं नाचिकेतमग्निं यश्चिनुते । **स मृत्युपाशान्पुरतः प्रणोद्य** । **सः मृत्युपाशान्**—रागद्वेषादिलक्षणान् । **पुरतः** - शरीर-पातात्पूर्वमेव । **प्रणोद्य**—तिरस्कृत्य । जीवद्दशायामेव रागादिरहितस्सन्नित्यर्थः । **शोकातिगो मोदते स्वर्गलोके** । पूर्वमेव व्याख्यातम् ॥ १८ ॥

विद्वान्नाचिकेतं चिनुते, स त्रिणाचिकेतो मोदत इत्युत्तरार्धान्वये क्लेशः. अतः, 'त्रिसुपर्णं पठन्ती' त्यत्रेवानु-वाकपरतया 'अयं वाव' त्यनुवाकत्रयाध्यायीत्यर्थ उक्तः । यद्यपि षष्ठप्रभृत्यनुवाकत्रयात्प्राच्योऽपि भागो नाचिकेतविषयकः, मन्त्राणां पाठात् । अत एव कृत्स्नप्रपाठकः नाचिकेताग्निप्रतिपादकः—अथापि नाचिकेत-ब्राह्मणं त्रयोऽनुवाका इति भट्टभास्करोक्तत्वात्तत्प्राधान्यविवक्षा युज्यते । अस्तु वा उशन्नित्यनुवाकस्य वाज-श्रवसानां दक्षिणानन्दविवेकेतिहासमात्रपरतया नाचिकेताग्निविषयविधिविशेषराहित्यात्तदनुवाकत्रयमेवोपयोग्यु-पासनपरमिति तावन्मात्रविवक्षा न च कृत्स्नाध्ययनं विनाऽनुष्ठानाप्रसक्तेरनुवाकत्रयाध्ययनं किमिति वक्त-व्यमिति वाच्यम — तथा सति, 'नाविद्वानधिकृतोऽस्ती'ति न्यायेन वैदुष्यस्याप्यर्थसिद्धतया 'त्रयमेत-द्विदित्वा य एवं विद्वा' नित्यस्यापि व्यर्थत्वात् । त्रिकर्मकृदित्यस्यापि स्वतस्सिद्धतया वैयर्थ्याच्च । सनियम-सम्पादितार्थज्ञानादौ आदरप्रदर्शनाय तत्तदिति चेत् — तादृशाध्ययने तत्प्रदर्शनायेदमप्यस्तु । अत उपा-सनादिविशेषविधायकानुवाकत्रयमत्र विवक्षितमिति ॥ मृत्युमित्यनुक्त्वा जन्ममृत्यू इति कथनात्, 'अप पुनर्मृत्युं जयति, योऽग्निं नाचिकेत चिनुते' इति पुनर्जन्माभावादेव पुनर्मृत्युर्नास्तीति ज्ञायते । तथाचावताररहस्यचिन्तनादिव इतोप्यस्मिन् जन्मन्येव मुक्तिरितिस्यात् । अत एव येयं प्रेत इतीदृशप्रकृताधि-कारिप्रायणमभिमतं स्यात् ॥ **पूर्वमन्त्रे**ति । पूर्वं मन्त्रस्य पूर्वमन्त्रः मन्त्रपूर्वार्धेत्यर्थः । पूर्वमन्त्रेतिपाठस्स्याद्वा ।

1, शान्ति-मत्यन्तमेतीत्यर्थः क.

*यो वा ए (ष्ये)तां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् ।
स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते ॥ १९ ॥
एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ २० ॥

**यो वा ए(ष्ये)तां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् । स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते** । यः एतां चितिं **ब्रह्मजज्ञात्मभूतां विदित्वा**—ब्रह्मात्मकस्वस्वरूपतयानुसंधाय नाचिकेतमग्निं चिनुते, स एव ब्रह्मात्मकस्वात्मानुसन्धानशाली सन् अपुनर्भवहेतुभूतं[1] यद्भगवदुपासनम् तदनुतिष्ठति । ततश्चाग्नौ भगवदात्मकस्वात्मत्वा[2](स्वात्मा)नुसन्धानपूर्वकमेव चयनं 'त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू' इति पूर्वमन्त्रे भगवदुपासनद्वारा मोक्षसाधनतया निर्दिष्टम्[3] : नान्यदिति भावः । अयं च मन्त्रः केषुचित्कोशेषु न दृष्टः : कैश्चिदव्याकृतश्च । अथापि[4] प्रत्ययितमैर्व्यासार्यादिभिरेव व्याख्यातत्वान्न प्रक्षेपशङ्का कार्या ॥ १९ ॥

**एष तेऽग्निर्नचिकेतः स्वर्ग्यः** । उपदिष्ट इति शेषः । **यमवृणीथा द्वितीयेन वरेण** । स्पष्टोऽर्थः । किञ्च **एतमग्निं तवैव प्रवक्ष्यन्ति जनासः** । जनास्तवैव नाम्ना एतमग्निं प्रवक्ष्यन्तीत्यर्थः । **तृतीयं वरं नचिकेतो वृणीष्व**। स्पष्टोऽर्थः ।

नन्वेतत्प्रकरणगतानां स्वर्गशब्दानां मोक्षपरत्वे किं प्रमाणमिति चेत्—उच्यते । भगवतैव भाष्यकृता 'स्वर्ग्यमग्निम्' इति मन्त्रं प्रस्तुत्य, "स्वर्गशब्देनात्र परमपुरुषार्थलक्षण-मोक्षोऽभिधीयते । स्वर्गलोका अमृतत्वं भजन्त इति तत्रस्थस्य जननमरणाभावश्रवणात्, 'त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू' इति च प्रतिवचनात्, तृतीय-वरप्रश्ने नचिकेतसा क्षयिफलानां निन्दिष्यमाणतया क्षयिफलविमुखेन नचिकेतसा क्षयिष्णु-स्वर्गफलसाधनस्य प्रार्थ्यमानत्वानुपपत्तेश्च, स्वर्गशब्दस्य प्रकृष्टसुखवचनतया निरवधिकानन्दरूप-मोक्षस्य स्वर्गशब्दवाच्यत्वसंभवात्" इति कण्ठतस्तात्पर्यतश्च प्रतिपादितत्वान्न शङ्कावकाशः ।

ननु 'स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति। उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके॥ स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो

१९. यो वा एतामिति श्रुतप्रकाशिकापाठः । तत्र वै इति छेदः । **ब्रह्मात्मकस्वस्वरूपतयेति** । अत्र श्रुतप्रकाशिका (१–४–६ सू) "यो वा एताम् ..........न जायत इति वाक्येन ब्रह्मात्मकचेतनतया वा तादृशदेवताधिष्ठितत्वेन वाऽनुसंधानपूर्वकमग्निं चिन्वानस्यापुनर्भवहेतुभूतब्रह्मोपासनद्वारमोक्षप्राप्तिर्युक्ता" इति । व्यासार्यादिभिरित्यादिपदादन्येऽप्येतं श्लोकमव्याकृतवन्त इति ज्ञायते ॥ तत्र योवापीति पाठस्स्यात् ।

२०. **प्रवक्ष्यन्ति जनासः** अध्यापयिष्यन्ति मनुष्या इत्यर्थे न पौनरुक्त्यगन्धोऽपि ।

* मन्त्रोऽयं शाङ्क, माध्व, नास्ति । 1. यद् भवेदुपासनं क. 2. स्वात्मत्वानुसंधानपूर्वक ख. घ. स्वात्मानुसंधानपूर्वक ग. 3 निर्दिष्टत्वात् ग. 4. प्रत्ययीत ख. प्रत्ययितम्य ग. घ. प्रत्यायित क.

प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ' ॥ इति द्वितीयवरप्रश्नमन्त्रद्वये चतुरभ्यस्तस्य स्वर्गशब्दस्य मोक्षपरत्वं किं मुख्यया वृत्त्या? उत अमुख्यया? नाद्यः; 'स्वर्गापवर्गमार्गाभ्याम्, 'स्वर्गापवर्गयोरेकम्,' 'न स्वर्गं नापुनर्भवम्, 'स स्वर्गस्स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इत्यादिप्रयोगेष्वपवर्गप्रतिद्वंद्विवाचितया लोकवेदप्रसिद्धस्य स्वर्गशब्दस्य मोक्षवाचित्वाभावात् । 'ध्रुवसूर्यान्तरं यत्तु नियुतानि चतुर्दश । स्वर्गलोकस्स कथितो लोकसंस्थानचिन्तकैः' इति पुराणवचनानुसारेण सूर्यध्रुवान्तर्वर्तिलोकविशेषस्यैव स्वर्गशब्दवाच्यतया तत्रैव लौकिकवैदिकव्यवहारदर्शनेन मोक्षस्थानस्यातथात्वात् । नापि अमुख्ययेति द्वितीयः पक्षः, मुख्यार्थे बाधकाभावात् ।

किमत्र प्रश्नवाक्यगतं जरामरणराहित्य—अमृतत्वभाक्त्वादिकं बाधकम्? उत प्रतिवचनगतजरामृत्युतरणादि? उत क्षयिष्णुस्वर्गस्य सर्वकामविमुखनचिकेतःप्रार्थ्यमानत्वानुपपत्तिर्वा? नाद्यः; स्वर्गलोकवासिनां जरामरणक्षुत्पिपासाशोकादिराहित्यस्य अमृतपानादमृतत्वप्राप्तेश्च पुराणेषु स्वर्गस्वरूपकथनप्रकरणेषु दर्शनात्, 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति स्मरणात्, [1]अत्रैव 'अजीर्यताममृतानामुपेत्य' इति (?)मृत्यावप्यमृतशब्दप्रयोगदर्शनाच्च, स्वर्गलोकवासिनामेव ब्रह्मोपासनद्वारा 'ते ब्रह्मलोके तु परान्तकाले' इति श्रुत्युक्तरीत्या अमृतत्वप्राप्तिसंभवेन 'स्वर्गलोका अमृतत्वं भजन्ते' इत्यस्योपपत्तेश्च[3] आपेक्षिकामृतत्वपरतया लोकवेदनिरूढोपसंहारिकामृतशब्दानुसारेण [4]प्रक्रमस्थाभ्यस्तानन्यथासिद्धविशेष्यवाचिस्वर्गशब्दस्यान्यथानयनासंभवात् । न हि देवदत्तोऽभिरूप इत्युक्ते अभिरूपपदस्वारस्यानुसारेण देवदत्तपदस्यात्यन्ताभिरूपयज्ञदत्तपरत्वमाश्रीयते ॥ न द्वितीयः; 'त्रिणाचिकेतस्त्रिभिः' इति मन्त्रस्य स्वर्गसाधनस्यैवाग्नेस्त्रिरभ्यासे[5] जन्ममृत्युतरणहेतुभूतब्रह्मविद्याहेतुत्वमस्तीत्येतदर्थकतया स्वर्गशब्दस्य मुख्यार्थपरत्वाबाधकत्वात् । अत एव तत्तुल्यार्थस्य 'करोति तद्येन पुनर्न जायते' इत्यस्यापि न स्वर्गशब्दमुख्यार्थबाधकत्वम् ॥ नापि क्षयिष्णोः स्वर्गस्य फलान्तरविमुखनचिकेतःप्रार्थ्यमानत्वानुपपत्तिरिति तृतीयः पक्षः । स्वर्गसाधनाग्निप्रश्नं प्रतिब्रुवता हितैषिणा मृत्युना अपृष्टेऽपि मोक्षस्वरूपे, 'अनन्तलोकाप्तिमथो प्रतिष्ठाम्, 'त्रिणाचिकेतस्त्रिभिरेत्य संधिं त्रिकर्मकृत् तरति जन्ममृत्यू' इत्यादिनोपक्षिप्ते उत्पन्ना मुमुक्षा 'अन्यं वरं नचिकेतो वृणीष्व' इति प्रतिषेधेन दृढीकृता । तस्यां च दशायां क्रियमाणा क्षयिष्णुफलनिन्दा प्राचीनस्वर्गप्रार्थनायाः कथं बाधिका स्यात् । किञ्च 'श्वोऽभावा मर्त्यस्य' इत्यादौ मर्त्यभोग[6](स्य) निन्दाया एव दर्शनेन स्वर्गनिन्दाया अदर्शनात्; स्वर्गशब्दस्य मोक्षपरत्वे तस्य ज्ञानैक-

मृत्यावपीति । अमृतानामुपेत्येत्यस्य भवादृशान् अमृतानुपेत्येत्यर्थकतया मृत्युरनित्योप्यमृतशब्दनिर्दिष्ट इति ।

1. तत्रैव. ग. 2. स्मृत्याचापि 3. उपपत्ते· ख. क. 4. अभ्यस्तेति नास्ति. ग. घ.
5. त्रिरभ्यासेन 6. भोग्य. ख.

साध्यतया तत्प्रयोजनकत्वस्याभावभावात् [1](वेन) उपक्रमोपसंहारमध्याभ्यस्तस्वर्गशब्दपीडाप्रसङ्गाच्च [2]। सन्तु वा प्रतिवचने बाधकानि; अथाप्युपक्रमाधिकरणन्यायेन [3]प्रक्रमस्थ प्रश्नवाक्यस्थस्वर्गशब्दस्यैव प्रबलत्वात्। न च 'भूयसां स्यात् सधर्मत्वम्' इति न्यायात् भूयोनुग्रहार्थमल्पस्योपक्रमस्य बाध्यत्वमस्त्विति वाच्यम्। 'मुख्यं वा–'इति सूत्रे औपसंहारिकबहूपेक्षयाऽपि मुख्यस्यैव प्राबल्योक्तेः। तस्मात् स्वर्गशब्दस्य मुख्यार्थपरित्यागे न किञ्चित् कारणमिति ॥

अत्रोच्यते—स्वर्गशब्दस्य मुख्ययैव वृत्त्या मोक्षवाचित्वम्। स्वर्गकामाधिकरणे, 'नागृहीतविशेषणान्यायेन' स्वर्गशब्दस्य प्रीतिवचनत्वमेव, न प्रीतिविशिष्टद्रव्यवाचिता' इत्युक्त्वा—'ननु स्वर्गशब्दस्य नागृहीतविशेषणान्यायेन' प्रीतिवचनत्वे सिद्धेपि देहान्तरदेशान्तरभोग्यप्रीतिवाचिता न सिद्ध्येत्। न च 'यस्मिन्नोष्णम्' इति[4] वाक्यशेषाद्विध्युद्देशस्थस्वर्गशब्दस्य प्रीतिविशेषवाचितानिश्चय इति वाच्यम्। प्रीतिमात्रवाचित्वेन निर्णीतशक्तिकतया सन्देहाभावेन 'सन्दिग्धे तु वाक्यशेषात्'इति न्यायस्यानवतारात्'इति परिचोद्य—'यद्यपि लोक एव स्वर्गशब्दस्य निर्णीतार्थता, तथापि लोकावगतसातिशयसुखवाचित्वे तत्साधनत्वं ज्योतिष्टोमादीनां स्यात्। तथाच अल्पधननरायाससाध्ये लौकिके तदुपायान्तरे संभवति न बहुधननरायाससाध्ये बह्वन्तराये ज्योतिष्टोमादौ प्रेक्षावान् प्रवर्तत इति प्रवर्तकत्वं ज्योतिष्टोमादिविधेर्न स्यात्। अतः वाक्यशेषावगते निरतिशयप्रीतिविशेषे स्वर्गशब्दस्य शक्तौ निश्चितायां वाक्यशेषाभावस्थलेऽपि यववराहादिष्विव स एवार्थः। लौकिके सातिशयप्रीतिभरिते गुणयोगादेव वृत्तेरुपपत्तेर्न शक्त्यन्तरकल्पना। न च प्रीतिमात्रवचनस्यैव स्वर्गशब्दस्य वेदे निरतिशयप्रीतिवाचित्वमस्त्विति वाच्यम्। निरतिशयत्वांशस्यान्यतोऽनवगतत्वेन तत्रापि शक्त्यवश्यम्भावेन स्वर्गशब्दस्य लोकवेदयोरनेकार्थता स्यात् (?)। यदा तु वैदिकप्रयोगावगतनिरतिशयप्रीतिवाचिता, तदा सातिशये लौकिके प्रीतित्वसामान्ययोगाद्गौणी वृत्तिः' इति मीमांसकैर्निरतिशयसुखवाचित्वस्यैव समर्थिततया मोक्षस्य स्वर्गशब्दवाच्यत्वे विवादायोगात्; पार्थशब्दस्यार्जुन इव तदितरपृथापुत्रेषु प्रचुरप्रयोगाभावेऽपि पार्थशब्दमुख्यार्थत्वानपायवत् स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकगतसुखविशेष इव अन्यत्र प्रचुरप्रयोगाभावेऽपि वाच्यत्वानपायात्। 'बर्हिराज्यादिशब्दानामसंस्कृततृणघृतादिष्वार्यैरप्रयुज्यमानानामपि अस्त्येव तद्वाचित्वम्। केषांचित् अप्रयोगमात्रस्य शक्त्यभावासाधकत्वात्। अतस्तृणत्वादिजातिवचना एव बर्हिरादिशब्दा' इति बर्हिराज्याधिकरणे स्थितत्वात्। तदुक्तं वार्तिके–'एकदेशेऽपि यो दृष्टः

अल्पधननरायासेत्यत्र निरायासेति पाठः स्यात्। यद्वा अल्पधनाल्पसंख्याकनराल्पायाससाध्यमिदम्। बहुधनबहुनरबह्वायाससाध्यं वैदिकमिति ॥

1. अभावेन ख. 2. प्रसङ्गात्. ग. 3. प्रथमस्थ. ग. प्रथमस्य. घ. 4. विशेषणन्यायेन. ग.घ. 5. इत्यादि. ख

शब्दो जातिनिबन्धनः । तदत्यागान्न तस्यास्ति निमित्तान्तरगामिता ॥' इति । ततश्च स्वर्गशब्दो मोक्षसाधारण एव ॥

ननु बर्हिराज्यादिशब्देषु असंस्कृततृणघृतादौ आर्यप्रयोगाभावेपि अनार्यप्रयोगसत्त्वात् असंस्कृतवाचिताऽस्तु नाम । स्वर्गशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकसुखविशेषातिरिक्तस्थले नियमेनाप्रयोगात्तद्व्यावृत्तैव शक्तिरभ्युपगन्तव्या । अत एव प्रोद्गात्रधिकरणे उद्गातृशब्दस्य ऋत्विग्विशेषे इतरव्यावृत्तप्रयोगविशेषेण रूढत्वात् तस्य चोद्गातुरेकत्वेन, 'प्रैतु होतुश्चमसः प्रोद्गातॄणाम्' इति बहुवचनार्थबहुत्वासंभवात् तदन्वयार्थं रूढिपूर्वकलक्षणया अपसुब्रह्मण्यानामेकस्तोत्रसंबन्धिनां त्रयाणां वा, ससुब्रह्मण्यानां चतुर्णां वा उद्गात्रादीनां छन्दोगानां ग्रहणमिति। एतद्विरुध्येत । तथा[1]- अहीनाधिकरणे 'तिस्र एव साह्नस्योपसदः द्वादशाहीनस्य' इत्यत्रत्या[2]हीनशब्दस्य 'अह्नः खः क्रतौ' इति व्याकरणस्मृत्या खप्रत्ययान्ततया अहर्गणसामान्यवाचितया व्युत्पादितस्याप्यहीनशब्दस्य नियमेन सत्रे अप्रयोगादहर्गणविशेषरूढिमङ्गीकृत्य ज्योतिष्टोमस्याहर्गणविशेषत्वाभावात्, [3]न हीन इति योगस्य रूढिपराहतत्वेन योगेन ज्योतिष्टोमे वृत्त्यसंभवात ज्योतिष्टोमप्रकरणाधीनाया अपि द्वादशाहीनस्येति द्वादशोपसत्ताया अहर्गणविशेषे [4]उत्कर्ष इत्युक्तम् । तथा 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' इति व्याकरणस्मृत्या सामिधेनीमात्रवाचितया व्युत्पादितस्यापि धाय्याशब्दस्य न सामिधेनीमात्रवचनत्वम्; नापि [5]धीयमानत्वरूपयोगार्थवशेन धीयमानमात्रवचनत्वम्, [6]स्तुतशस्त्रार्थतया धीयमानासु ऋक्षु सामिधेनीमात्रे च धाय्याशब्दाप्रयोगात्; अपितु 'पृथुपाजवत्यौ धाय्ये भवतः' इत्यादिवैदिकप्रयोगविषयेषु पृथुपाजवत्यादिष्वेव धाय्याशब्दस्य शक्तिरिति 'समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्यास्स्युः' इति पाञ्चमिकाधिकरणे स्थितम् । एवमादिकं सर्वं विरुद्ध्येत । स्वर्गशब्दे त्वदुक्तरीत्या प्रयोगाभावेऽपि शक्तिसंभवे उद्गात्रादिशब्दानां ऋत्विग्विशेषादिषु रूढेरकल्पनीयत्वादिति—चेत्—सत्यम् । यदि सर्वात्मना तदतिरिक्ते स्वर्गशब्दप्रयोगो न स्यात्, तदा तद्व्यावृत्ता रूढिरभ्युपगन्तव्या स्यात् । अस्ति हि तत्रापि प्रयोगः । 'तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषा वृतः, यो वै तां ब्रह्मणो वेद', 'तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः', 'अपहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति' इति तैत्तिरीयक—बृहदारण्यक—तलवकारादिषु अध्यात्मशास्त्रेषु प्रयोगदर्शनात् पौराणिकपरिकल्पितस्वर्गशब्दरूढेः सांख्यपरि-

**अत एवेति** । अस्य ग्रहणमित्यनेनान्वयः । अत एव प्रोद्गात्रधिकरणे त्रयश्चत्वारो वा गृहीता इत्यर्थः । ग्रहणमित्युक्तमिति पाठः स्याद्वा ? **अहीनशब्दस्य** या रूढिः, तामत्रत्याहीनशब्दस्याङ्गीकृत्येति योजना ॥

1. तथा हि. ग. 2. अयं क पाठः । अन्यत्र 'अत्राहीन' 3. अयं ख. पाठः, अन्यत्र अहीन इति योगस्य. 4. विशेषोत्कर्षः ग. घ. 5. विधीयमान. ख. 6. स्तुति. ग. घ.

कल्पिताव्यक्तशब्दरूढिवदनादरणीयत्वात् । अस्मिन्नेव प्रकरणे 'त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके' इति मन्त्रे कर्मज्ञानसमुच्चयसाध्यवाचकतया श्रूयमाणस्य स्वर्गलोकशब्दस्य सूर्यध्रुवान्तर्वर्तिलोकव्यतिरिक्तवैराजपदवाचकतया परैरपि व्याख्यातत्वाच्च । ननु सूर्यलोकोर्ध्ववर्तिलोकत्वस्यैव प्रवृत्तिनिमित्ततया तस्य च वैराजपदेऽपि सत्त्वात् नामुख्यार्थत्वमिति चेत्– तर्हि भगवल्लोकेऽपि ऊर्ध्ववर्तित्वाविशेषेण मुख्यार्थत्वानपायात् । 'स्वर्गापवर्गमार्गाभ्याम्' इत्यादिव्यवहारस्य ब्राह्मणपरिव्राजकन्यायेनोपपत्तेश्च ।

अस्तु वा अमुख्यार्थत्वम्[1] । मुख्यार्थे बाधकसत्त्वात् । किमत्र बाधकमिति चेत्— श्रूयतामवधानेन । 'स्वर्गे लोके न भयं किञ्चनास्ती'ति प्रथम(मे)[2] प्रश्नमन्त्रे 'न भयं किंचनास्ती' ति अपहतपाप्मत्वं प्रतिपाद्यते । 'स्वर्गेऽपि पातभीतस्य' इत्युक्तरीत्या केन पापेन कदा पतिष्यामीति भीत्यभावः प्रतिपाद्यते । स ह्यपहतपाप्मन एव संभवति । 'न तत्र त्वं न जरया बिभेती' त्यनेन विजरत्वविमृत्युत्वे प्रतिपाद्येते । 'उभे तीर्त्वा अशनायापिपासे' इत्यनेन विजिघत्सत्वापिपासत्वे प्रतिपाद्येते । 'शोकातिग' इत्यनेन विशोकत्वम् । 'मोदते स्वर्गलोके' इत्यनेन 'स यदि पितृलोककामो भवति, सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति । तेन पितृलोकेन संपन्नो महीयते' इति श्रुतिसन्दर्भप्रतिपाद्ये सत्यकामत्वसत्यसङ्कल्पत्वे प्रतिपाद्येते । ततश्चाध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्राह्म[3]गुणाष्टकाविर्भावस्येह प्रतीयमानतया तस्यैवेह ग्रहणसंभवे पौराणि[4]कस्वर्गलोकगतापेक्षिकजरामरणाद्यभावस्वीकारस्यानुचितत्वात् ।

अत एव सप्तमे विध्यन्ताधिकरणे अनुपदिष्टेतिकर्तव्यताकासु सौर्यादिविकृतिभावनासु इतिकर्तव्यताकाङ्क्षायां वैतानिककर्माधिकारप्रवृत्तत्रयीविहितत्वसामान्यात् वैदिक्येव [5]दार्शपौर्णमासी इतिकर्तव्यता उपतिष्ठत इत्युक्तम् । उक्तं च शास्त्रदीपिकायाम्—

'वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ॥' इति ।

न च–'यद्येकं यूपमुप[6]स्पृशेत्, एष ते वायाविति ब्रूयात्' इति विहितस्य 'एष ते वायौ' इति वचनस्य वैदिकत्वसामान्येन विहितवैदिकयूपस्पर्शनिमित्तकत्वमेव स्यात् । नचेष्टापत्तिः । 'लौकिके दोषसंयोगात्' इति नावमिकाधिकरणविरोधप्रसङ्गात् इति वाच्यम् । 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यः' इति प्रतिषिध्य, 'यद्येकं यूपं स्पृशेत् एष ते वायाविति ब्रूयात्' इति अनन्तरमेव विहितस्य प्रतिषिद्ध–प्रायश्चित्तसाकांक्षलौकिकस्पर्श-

1. अमुख्यार्थत्वस्वीकारः. ख. 2. प्रथमे. ग. 3. ब्रह्मगुण. ग. घ. 4. पौराणिकस्य. ख. 5. दर्शपूर्णमासिकी. ग. दर्शपौर्णमासिकी. घ. 6. यूपं स्पृशेत्. ग. घ.

येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥ २१ ॥

विषयत्वावश्यम्भावेन वैदिकविषयत्वासंभवेपि असति बाधके वैदिकविषयत्वस्य युक्तत्वात् । अत एव 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्निर्वपेत्' इति विहितेष्टिर्वैदिक एवाश्वदाने, न तु 'न केसरिणो ददाति' इति निषिद्धे प्रायश्चित्तसापेक्षे सुहृदादिभ्यः स्नेहादिना क्रियमाणे इति निर्णीतं तृतीये । तथा 'योगिनः प्रति स्मर्येते स्मार्ते चैते' इति सूत्रे स्मार्तस्य वेदान्ते न प्रत्यभिज्ञानमित्युक्तं परैः । ततश्च 'स्वर्गे लोके' इति मन्त्रे अध्यात्मशास्त्रसिद्धस्यापहतपाप्मत्वादिब्रह्मगुणाष्टकस्यैव ग्रहणमुचितम् । 'स्वर्गलोका अमृतत्वं भजन्ते' इति द्वितीयप्रश्नमन्त्रे अमृतत्वभाक्त्वश्रवणात्; अमृतत्वशब्दस्याध्यात्मशास्त्रे मोक्ष एव प्रयोगात् । 'अजीर्यताममृतानाम्' इत्यत्र अमृतशब्दस्यापि मुक्तपरत्वेनापेक्षिकामृतत्वपरत्वाभावात् । उत्तरत्र 'ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्,' 'अभयं तितीर्षतां पारं नाचिकेतं शकेमहि' इति परस्यैव ब्रह्मणो नाचिकेताग्निप्राप्यत्वकथनेन स्वर्गशब्दस्य प्रसिद्धस्वर्गपरत्वासंभवात् । 'नान्यं तस्मान्नचिकेता वृणीते' इति ब्रह्मेतरविमुखतया प्रतिपादितस्य नचिकेतसः क्षयिष्णुस्वर्गप्रार्थनानुपपत्तेश्च । 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इत्यत्र—'समसंख्याकयोः परस्परविरोध एव मुख्यस्य प्राबल्यम् । न ह्यल्पवैगुण्ये संभवति बहुवैगुण्यं प्रयोगवचनं क्षमते । अतः यत्र जघन्यानां भूयस्त्वम्, तत्र 'भूयसां स्यात् सधर्मत्वम्' इति न्याय एव प्रवर्तते' इत्येव[1] मीमांसकैः स्थिरीकृत्य सिद्धान्तितत्वात्; प्रतर्दनविद्यायाम् 'एष ह्येव साधु कर्म कारयति' 'एष लोकाधिपतिरेष लोकपालः —आनन्दोऽजरोऽमृतः' इत्यौपसंहारिकपरमात्मधर्मबाहुल्येन प्रक्रमश्रुतजीवलिङ्गबाधस्य 'प्राणस्तथानुगमात्' इत्यत्र प्रतिपादितत्वादित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ २० ॥

नचिकेता आह—**येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ।**[2] 'अत्ता चराचरग्रहणात्' इत्यधिकरणे इमं मन्त्रं प्रस्तुत्येत्थं हि भगवता भाष्यकृता—'अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते । एवञ्च 'येयं प्रेत' इति न शरीरवियोगमात्राभिप्रायम् । अपितु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य संज्ञास्ति' इति । अयमर्थः—मोक्षाधिकृते मनुष्ये प्रेते—सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं **विद्याम्** जानीयामिति । तथाहि बहुधा विप्रतिपद्यन्ते

प्रतिगृह्णीयादितीदं ण्यर्थगर्भम् । ततो दद्यादित्यर्थ इति तत्रैव स्थितम् । प्रतिमुखेत्यादावपि प्रत्यनीकपरतया वा दद्यादित्यर्थोऽस्तु ॥

1. इति एवं मीमांसकैः सिद्धान्तितत्वात् : ख. 2. अत्ताधिकरणे, ख.

—केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्। [1]परे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरे अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्य अनुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते। तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युः'—इति भाषितम्[2]॥ तथा 'त्रयाणामेव चैवम्' इति सूत्रे 'तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्' इति च[3] भाषितम्। श्रुतप्रकाशिकायां च, "येयमित्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः। प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्धः। निर्विशेष[4]तापत्तिर्मोक्षश्चेत्, वाक्यार्थज्ञानस्योपायता स्यात्। उभयलिङ्गकं प्राप्यं चेत्, तथात्वेनोपासनमुपायः स्यात्। अतः मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षम्" इति [5]वर्णितम्।

अतः 'येयं प्रेत' इत्यस्य मुक्तस्वरूपप्रश्नपरत्वमेव, न देहातिरिक्तपारलौकिककर्मानुष्ठानोपयोगिकर्तृभोक्त्रात्मकजीवस्वरूपमात्रपरत्वम्। अन्यथा तस्यार्थस्य दुरधिगमत्वप्रदर्शनविविधभोगवितरणप्रलोभनपरीक्षाया असंभवादिति द्रष्टव्यम्। नचिकेतसो ह्ययमभिप्रायः—हितैषिवचनादात्मा परित्यक्तचरमदेहः आविर्भूतापहतपाप्मत्वादिगुणाष्टको भवतीत्युपश्रुत्य, 'स्वर्गे लोके न भयं किंचनास्ति' इत्यादिना मन्त्रद्वयेन मोक्षसाधनभूतामिमप्राक्षम्। अधुना तु वादिविप्रतिपत्त्या तद्विषये सन्देहो जायते। अयं, 'स्वर्गे लोके न भयं किंचनास्ति' इत्यादिना [6]भयोपन्यस्तापहतपाप्मत्वादिविशिष्टरूप आत्मा अस्तीत्येके, [7]नास्तीत्यपरे, त्वया उपदिष्टः एतज्जानीयामिति। अत एव प्रतिवचने, 'एतच्छ्रुत्वा संप्रतिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते मोदनीयं हि लब्ध्वा' इति एतत्प्रश्नानुगुण्यमेव दृश्यते। अतो यथोक्त एवार्थः।

केचित्तु—'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति सूत्रे तिरोहितमिति निष्ठान्तपदे उपसर्जनतया निर्दिष्टस्य तिरोधानस्य 'देहयोगाद्वा सोऽपि' इति तदुत्तरसूत्रे सोऽपि—तिरोधानभावोऽपीति पुंलिङ्ग[8]तच्छब्देन परामर्शदर्शनात्, [9]'गुहां प्रविष्टावात्मानौ हि

1. अपरे ख. 2. 'भाषित'मिति नास्ति ख. 3. चो नास्ति. घ. 4. निर्विशेषापत्तिः ग. 5. 'इति च.' ख. घ. 6. उपन्यस्तः ख. 7. नायमस्तीत्यपरे. ग. 8. पुंल्लिङ्गान्त. ख. 9. गुहामित्यादि परामर्शदर्शनादित्यन्तं ग. कोशे भ्रष्टम्।

**देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेय[1]मणुरेष धर्मः ।**
**अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २२ ॥**
**देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुज्ञेयमात्थ ।**
**वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २३ ॥**

तद्दर्शनात्' इत्यत्रापि 'प्रविष्टमिति उपसर्जनतया निर्दिष्टस्य प्रवेशस्य तद्दर्शनादिति तच्छब्देन परामर्शदर्शनात्, 'सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य' इति वामनसूत्रे कृत्तद्धितादिवृत्तिन्यग्भूतस्यापि सर्वनाम्ना परामर्शस्याङ्गीकृतत्वात्, 'येयं प्रेते' इति [2]निष्ठान्तप्रेतशब्दे उपसर्जनतया निर्दिष्टस्यापि प्रायणशब्दितमोक्षस्य 'देहयोगाद्वा सोपि' इतिवत् 'नायमस्तीति चैके' इत्यत्र अयमिति पदेन परामर्शोऽस्तु । न चैवं भुक्तवत्यस्मिन् भोजनमस्ति वा न वेति वाक्यवत्, 'मुक्तेऽस्मिन् मोक्षोऽस्ति न वा' इति सन्देहकथनं व्याहतार्थमिति वाच्यम्, मोक्षसामान्यमभ्युपेत्य [3]मोक्षविशेषसन्देहस्योपपादयितुं शक्यत्वात् । अयमित्यनेन विशेषपरामर्शसंभवात् । ननु न प्रायणशब्दस्य मोक्षवाचित्वं क्वचिद्दृष्टम् । शरीरवियोगवाचित्वात् । श्रुतप्रकाशिकायां शरीरवियोगवाचित्वमभ्युपेत्यैव चरमशरीरवियोगपरतया व्याख्यातत्वादिति चेत्—अस्त्वेवम् । तथाप्ययमित्यनेन चरमशरीरवियोगपरामर्शसंभवात् तद्विषयिण्येव विचिकित्सा अस्तु । ननु तस्य निश्चितत्वात् तद्विषयिणी विचिकित्सा नोपपद्यत इति चेत्—सत्यम् । अयं चरमशरीरवियोगः '[4]ब्रह्मस्वरूपाविर्भावपूर्वभावित्वेन रूपेणास्ति न वेति विचिकित्सायामुपपादकत्वात् इति वदन्ति ॥ २१ ॥

एवं मुक्तस्वरूपे पृष्टे मृत्युः दीयमानास्यातिगहनतया पारं प्राप्तुमप्रभवते मध्ये पतयालवे नोपदेष्टव्यमिति मत्वाऽऽह—**देवैरत्रापि विचिकित्सितं पुरा** । बहुदर्शिभिरपि देवैरस्मिन् मुक्तात्मस्वरूपे **विचिकित्सितम्**—संशयितम् । **न हि सुज्ञेयमणुरेष धर्मः** । आत्मतत्त्वं न सुज्ञानमिति सूक्ष्म एष[5] धर्मः । सामान्यतो धर्म एव दुर्ज्ञानः । तत्राप्ययं दुर्ज्ञान इति भावः । **अन्यं वरं नचिकेतो वृणीष्व** । स्पष्टोऽर्थः । **मा मोपरोत्सीरति मा सृजैनम्** । **मा मा** इति निषेधे वीप्सायां द्विर्वचनम् । उपरोधं मा कार्षीः । एनं [6]**मा माम् अतिसृज** मुञ्च ॥ २२ ॥

एवमुक्तो नचिकेता आह—**देवैरत्रापि विचिकित्सितं किल** । स्पष्टोऽर्थः । **त्वं च मृत्यो यन्न सुज्ञेयमात्थ** । त्वं च मृत्यो **न सुज्ञेयमिति** यदात्मस्वरूपमुक्तवान् ।

२२. देवैरप्यत्रेति योजना । हेतुगर्भहिशब्दार्थं दर्शयन्नाह – **इति सूक्ष्म** इति । **धर्म** इत्युपायवाचिशब्दयोगात् प्रेतस्य जीवस्य निर्विकारत्वे रूपमत्ताहेतुः कश्चिदुपायोऽपि प्राकृष्ट इति सिद्ध्यति । **ग्रामेत्यादेः** मा मा वा वरस्व एनं वरं मां अति मुञ्च, मां न पृच्छेत्यर्थो भावप्रकाशिकायाम् । **मोपरोत्सी**रिति मा भूत् । एनं वरं मा सृज गृहाणेत्यर्थोऽपि वदन्त इव ॥

1. सुविज्ञेयम् शा.; सुज्ञेनो मध्व । 2. पूर्वत्र निष्ठा ख. 3. मोक्षविशेषे घ.
4. ब्रह्मरूप ग. घ. 5. सूक्ष्मो धर्मः ख.ग. 6. मा इति नास्ति ग. घ.

शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।
भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥ २४ ॥
एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २५ ॥
ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामांश्छन्दतः प्रार्थयस्व ।
इमा रामास्सरथास्सतूर्या न हीदृशा लम्भनीया मनुष्यैः ।

**वक्ता चास्य त्वादृगन्यो न लभ्यः नान्यो वरस्तुल्य एतस्य कश्चित्** । त्वादृक्—त्वादृश इत्यर्थः । अन्यत् स्पष्टम् ॥ २३ ॥

एवं नचिकेतसोक्तो मृत्युः विषयस्य दुरधिगमतया मध्ये न [1]त्यक्ष्यतीति निश्चित्य सत्यपि ग्रहणसामर्थ्ये विषयान्तरासक्तचेतसे एतादृशं मुक्तात्मतत्त्वं नोपदेशार्हमिति मत्वा मुमुक्षास्थैर्यानु(नि)वृत्त्यर्थं प्रलोभयन्नुवाच—**शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान्** । स्पष्टोऽर्थः । **भूमेर्महदायतनं वृणीष्व** । पृथिव्याः विस्तीर्णम् **आयतनं** मण्डलं राज्यं वृणीष्व । अथवा भूमेस्सबन्धि **महदायतनं** विचित्रशाला-प्रासादादियुक्तं गृहं वृणीष्व । **स्वयं च जीव शरदो यावदिच्छसि** । (यावत्-?) यावद्वर्षाणि जीवितुमिच्छसि, तावज्जीवेत्यर्थः ॥ २४ ॥

**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च** । उक्तेन वरेण सदृशमन्यदपि[2] वरं मन्यसे चेत्, तदपि वृणीष्व प्रभूतं हिरण्यरत्नादिकं चिरजीवनं[3] चेत्यर्थः । **महाभूमौ नचिकेतस्त्वमेधि** । **एधि**—भव । राजेति शेषः । अस्तेर्लोण्मध्यमपुरुषैकवचनम् । **कामानां त्वा कामभाजं करोमि** । **कामानाम्** – काम्यमानानामप्सरःप्रभृतिविषयाणाम् । **कामभाजम्**—कामः=कामना । तां विषयतया भजतीति कामभाक् तम् । काम्यमानाप्सरः-प्रभृतीनामपि कामनाविषयं करोमीत्यर्थः ॥ २५ ॥

**ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामांश्छन्दतः प्रार्थयस्व** । **छन्दतः** यथेच्छ[4]मित्यर्थः । **इमा रामास्सरथास्सतूर्या न हीदृशा लम्भनीया मनुष्यैः** । रथवा-

२४. निश्चित्येति । यमेनोपेक्षार्थमुक्तदुरधिगमत्वादिकमेव हेतूकृत्योपदेशप्रार्थनात् अत्यजत्वं निश्चित्येत्यर्थः ।

२५. अन्यदपीति 'एतत् त्रयाणां प्रथमं वरं वृणे' इतिवत् क्लीबनिर्देशः । **वरं मन्यसे** वरत्वेन मन्यसे । एवञ्च **तदपी**त्यपि युक्तम् ।

ननु नान्यो वरस्तुल्य एतस्य कश्चिदित्युक्तत्वात् कथमुक्तेन वरेण सदृशमन्यदपीत्यत्रोच्यत इति चेत् – **उक्तेन वरेणे**त्यस्य पूर्वश्लोकोक्तेन वरणीयेनेत्यर्थः । यद्वा यमेन प्रलोभनाय तुल्यत्वारोपः कृतस्स्यात् ॥

२६. ईदृशा इति रामाविशेषणं छान्दसम् । नहीदृशाः कामा लम्भनीया इति नहीत्यादेः पृथग्वा. क्यत्वे रामा इत्यत्र प्रदीयन्त इत्यध्याहारस्स्यात् ॥

1. न त्यजति ख. मध्ये नङ्क्ष्यति. 2. अन्यमपि घ. ग. 3. चिरं जीवनं ग. घ. 4. यथेष्टं ख.

**आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनु प्राक्षीः ॥ २६ ॥**
**श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः ।**
**अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्य[1]गीते ॥ २७ ॥**
**न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा[2] ।**
**जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयस्स एव ॥ २८ ॥**

---

दित्रसहिता मया दीयमानाः स्त्रियो मनुष्याणां दुर्लभा इत्यर्थः । **आभिर्मत्प्रत्ताभिः परिचारयस्व** । आभिःमया दत्ताभिः परिचारिकाभिः पादसंवाहनादिशुश्रूषां कारयेत्यर्थः । **नचिकेतो मरणं माऽनुप्राक्षीः** । **मरणमनु** मरणात् मुक्तः पश्चात्, मुक्तात्मस्वरूपमिति यावत् । मरणशब्दस्य देहवियोगसामान्यवाचिनोपि प्रकरणवशेन विशेषवाचित्वं न दोषायेति द्रष्टव्यम् ॥ २६ ॥

एवं प्रलोभ्यमानोपि नचिकेताः अक्षुभितहृदय आह– **श्वोऽभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः** । हे अन्तक! त्वदुपन्यस्ता ये मर्त्यस्य कामाः ते **श्वोऽभावाः** — श्वः अभावः येषां ते तथोक्ताः । दिनद्वयस्थायिनो न भवन्तीत्यर्थः । सर्वेन्द्रियाणां यदेतत्तेजः तत् क्षपयन्ति । अप्सरःप्रभृतिभोगा हि सर्वेन्द्रियदौर्बल्यावहा इति भावः । **अपि सर्वं जीवितमल्पमेव** । ब्रह्मणोपि जीवितं स्वल्पम्, किमुतास्मदादिजीवितम् । अतश्चिरजीविकापि[3] न वरणार्हेति भावः । **तवैव वाहास्तव नृत्यगीते** । **वाहाः** रथादयः । तिष्ठन्त्विति शेषः ॥ २७ ॥

**न वित्तेन तर्पणीयो मनुष्यः** । न हि वित्तेन लब्धेन कस्यचित्तृप्तिः दृष्टचरी । 'न जातु कामःकामानामुपभोगेन शाम्यति' इति न्यायादिति भावः । किञ्च, **लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा** । त्वां वयं दृष्टवन्तश्चेत्, वित्तं प्राप्स्यामहे(?) (प्राप्स्यामः?) (लप्स्यामहे?) त्वद्दर्शनमस्ति चेन वित्तलाभे को भार इति भावः । तर्हि चिरजीविका[4] प्रार्थनीयेत्यत्राह— **जीविष्यामो यावदीशिष्यसि त्वं** । यावत्कालं याम्ये पदे त्वमीश्वरतया वर्तसे, व्यत्ययेन परस्मैपदम्— तावत्पर्यन्तमस्माकमपि जीवनं सिद्धमेव । न हि त्वदाज्ञातिलङ्घनेन अस्मज्जीवितान्तकरः कश्चिदस्ति । वरलाभालाभयो[5]रपि तावदेव जीवनमिति भावः । **वरस्तु मे वरणीयस्स एव** । अतः 'येयं प्रेत' इति प्राक्प्रस्तुतो वर एव वरणीय इत्यर्थः ॥ २८ ॥

---

२७. यन्मर्त्यस्य, एतत्सर्वेन्द्रियाणां तेजः श्वोभावाः कामा जरयन्तीत्यन्वयः ॥

२८. ईशब्दाचारेण्यमि इशिष्यसीत्युक्तौ निन्दाधिक्यस्फूर्त्या तदुपेक्षया व्यत्ययपक्ष एवाऽऽदृतः ।

---

1. नृत्तगीतम् माध्व. 2. त्वाम् माध्व. 3. चिरजीविता क, ख. 4. चिरजीविता ख. 5. लाभवयसोः क.

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क तदास्थः (कधःस्थः)[1] प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदाननतिदीर्घे जीविते को रमेत ॥ २९ ॥

यस्मिन्निदं विचिकित्सन्ति मृत्यो (यत्)सांपराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ ३० ॥

॥ इति प्रथमा वल्ली ॥

**अजीर्यताममृतानामुपेत्य** । जरामरणशून्यानां मुक्तानां स्वरूपं ज्ञात्वा । **जीर्यन्मर्त्यः क तदास्थः प्रजानन्** । **प्रजानन्** विवेकी जरामरणोपप्लुतोऽयं जनः **तदास्थः** जरामरणाद्युपप्लुताप्सरःप्रभृतिविषयविषयकास्थावान् , **क**–[2]कथं भवेदित्यर्थः । **कधस्स्थ** इति (इति पाठे?) अधोदेशभूतभूमिष्ठ इत्यर्थः । **अभिध्यायन् वर्णरतिप्रमोदान्** । तत्रत्यान् **वर्णरतिप्रमोदान्** । **वर्णाः** आदित्यवर्णत्वादिरूपविशेषाः, **रतिप्रमोदाः** ब्रह्मभोगादि-जनितानन्दविशेषाः, तान् सर्वान् **अभिध्यायन्** निपुणतया निरूपयन् । **अनतिदीर्घे जीविते को रमेत** । अत्यल्पे ऐहिके चिरजीविते कः प्रीतिमान् स्यादित्यर्थः ॥ २९ ॥

**यस्मिन्निदं विचिकित्सन्ति मृत्यो सांपराये महति ब्रूहि नस्तत्** । महति पारलौकिके यस्मिन् मुक्तात्मस्वरूपे संशेरते, तदेव मे ब्रूहि । **योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते** । गूढमात्मतत्त्वमनुप्रविष्टः योऽयं वरः तस्मादन्यं नचिकेता न वृणीते स्म इति श्रुतेर्वचनम् ॥ ३० ॥

॥ इति प्रथमवल्लीप्रकाशिका ॥

२९. भूमिष्ठो जीर्यन्मर्त्यः. जरामरणदूरदेवसकाशमेत्य देवलोकभूलोकगतवर्णरतिप्रमोदवैलक्षण्यं भूमावनतिदीर्घं जीवितं च विदितवान् कथं तत्रापेक्षां कुर्यात् । उत्कृष्टभोगभाग्भिर्भवादृशै र्देवैरपि विचिकित्सितमपेक्षितमुपेक्ष्य भवादृशभोगतोऽपि जुगुप्सितमधोलोकभोगं कथमहमिच्छेयमित्यर्थोऽपि न बाधितः । अथापि मोक्षस्य, मोक्षे जक्षत्क्रीडन्नित्यादिविशेषाणाञ्च हितैषिवचनबलेन बुद्धत्वात्तत्र विशेषतोऽभिरुचिः शिष्यस्य प्रदर्शिता भवति । अमृतादिपदस्य मुख्यं स्वाभिमतयोजनायामिति तथाऽत्र व्याख्यातम् ॥

३०. योऽयमित्यर्धमपि नचिकेतोवाक्यमेव भवितुमर्हति, नाहं वृणे इत्यनुक्त्वा, न नचिकेता वृणीते इत्युक्तिर्वरे स्वस्याऽऽग्रहप्रदर्शनाय, उक्तवरत्यागे नाहं नचिकेताः स्यामिति । अद्य रामस्य रामत्वमितिवत् । उपर्यपि विद्याभीप्सिनं त्वां मन्ये इति वक्तव्ये विद्याभीप्सिनं नचिकेतसं मन्ये इति वक्ष्यते । अन्यथा श्रुतिवाक्यत्वे योऽयमितिपदास्वारस्यम्, वृणीत इति वर्तमानकालबाधात् स्मेत्यध्याहारप्रसङ्गश्च । अथाप्यात्मविकत्थनदोषशङ्कायाः अप्रसङ्गाय यथाशाङ्करमेव व्याख्याय स्मेत्यध्याहारोऽपि कृत इति ॥

1. क्वाधःस्थः भाष्य । 2. क्वेति नास्ति क. कोशे.

## ॥ अथ द्वितीयवल्ली ॥

हरिः ओम् । अन्यच्छ्रेयोऽन्यदुतैव[1] प्रेयस्ते उभे नानार्थे पुरुषँ सिनीतः ।
तयोश्श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्[2]वृणीते ॥ २ ॥
स त्वं प्रियान् प्रियरूपाँश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैताँ सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥
दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।

---

एवं शिष्यं परीक्ष्य तस्य मुमुक्षास्थैर्यं[3] निश्चित्य तस्योपदेशयोग्यतां मन्वानः मुमुक्षां स्तौति—**अन्यच्छ्रेयोऽन्यदुतैव प्रेयः** । अतिप्रशस्तं मोक्षवर्त्माप्यन्यत् । प्रियत्वास्पदं [4]भोगवर्त्माप्यन्यत् । **ते उभे नानार्थे पुरुषँ सिनीतः** । ते—श्रेयःप्रेयसी परस्परविलक्षण-प्रयोजने सती[5]पुरुषं **सिनीतः**— बध्नीतः । पुरुषं स्ववशतामापादयत इत्यर्थः । **तयोश्श्रेय आददानस्य साधु भवति** तयोर्मध्ये **श्रेय आददानस्य**— मोक्षाय प्रयतमानस्य **साधु**—भद्रं भवति । **हीयतेऽर्थाद्य उ प्रेयो वृणीते** । यस्तु प्रेयो वृणीते स पुरुषार्थाद्भ्रष्टो भवति । **उ** इत्यवधारणे ॥ १ ॥

**श्रेयश्च प्रेयश्च मनुष्यमेतः** । श्रेयश्च प्रेयश्च मनुष्यं प्राप्नुतः । **तौ संपरीत्य विविनक्ति धीरः** । तौ श्रेयःप्रेयःपदार्थौ सम्यगालोच्य नीरक्षीरे हंस इव पृथक्करोति । **श्रेयो हि धीरोऽभि प्रेयसो वृणीते** । धिया रमत इति **धीरः** प्रज्ञाशाली प्रेयोपेक्षया **अभि**--अभ्यर्हितं श्रेय एव वृणीते । **प्रेयो मन्दो योगक्षेमाद्वृणीते** । मन्दमतिः योगक्षेमाद्धेतोः प्रेयो वृणीते । शरीरस्योपचयो योगः, क्षेमः परिपालनम् ॥ २ ॥

**स त्वं प्रियान्प्रियरूपाँश्च कामान्** । तादृशस्त्वं स्वतो रूपतश्च **प्रियान्**—काम्यमानान् स्त्र्यादीनित्यर्थः । **अभिध्यायन्नचिकेतोऽत्यस्राक्षीः** । दुःखोदर्कत्वदुःखमिश्रत्वादिदोषयुक्ततया निरूपयन् त्यक्तवानसीत्यर्थः । **नैतां सृङ्कां वित्तमयीमवाप्तः** । **वित्तमयीं**—धनप्रायां **सृङ्कां**—कुत्सितगतिं [6]मूढजनसेवितां **मेतां**[7]नावाप्तवानसि । **यस्यां मज्जन्ति बहवो मनुष्याः** । स्पष्टोऽर्थः ॥ ३ ॥

**दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता** । या अविद्येति ज्ञाता कामकर्मात्मिका, या च विद्येति ज्ञाता वैराग्यतत्त्वज्ञानमयी, एते **दूरम्** अत्यन्तं **विषूची**—

---

४. या विषूची अविद्या इत्येदमुत्तरत्रान्वये एकवचनमपि घटते अथापि तदर्थस्यापि विधेयत्व कामाय विषूच्यावित्युक्तम् । एते इति श्रेयःप्रेयोग्रहणे तु विषूची इति क्लीबद्विवचनं स्वरसम् । अन्यथा

1. उतेव माध्व । 2. योगक्षेमान् माध्व । 3. स्थैर्यं च क. 4. अमोक्षवर्त्म क. 5. सती इति ख. कोशे भ्रष्टम् । 6. विमूढ क. 7. एतामिति क. कोशे नास्ति.

विद्या'भीप्सितं(नं) नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त[1] ॥ ४ ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ५ ॥
न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

विषूच्यौ भिन्नगती; परस्परविरुद्धे च। **विद्याभीप्सिनं नाचिकेतसं मन्ये। विद्याभीप्सिनं** विद्यार्थिनम्। **विद्याभीप्सितम्**मिति पाठे आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः। छान्दसत्वाद्वा। **न त्वा कामा बहवोऽलोलुपन्त**। कामा बहवोऽपि त्वां **नालोलुपन्त**— श्रेयोमार्गाद्विच्छेदं न कृतवन्तः। विषयवशगो न भवसीत्यर्थः। 'लुपसद 'इति यङन्ताल्लङ्। छान्दसो यलोपः। यङ्लुगन्ताद्वा छान्दसमात्मनेपदम् अदभावश्च[2] ॥ ४ ॥

'अविद्या या च विद्येति ज्ञाता' इत्युपात्तमार्गद्वये अविद्यामार्गं निन्दति— **अविद्यायामन्तरे वर्तमानाः**। काम्य(म)कर्मादिलक्षणायामविद्यायां मध्ये घनीभूत इव तमसि वर्तमानाः। **स्वयं धीराः पण्डितंमन्यमानाः**। स्वयमेव प्रज्ञाशालिनः शास्त्रकुशलाश्चेति मन्यमानाः। **दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीयमाना यथाऽन्धाः। दन्द्रम्यमाणाः** जरारोगादिदुःखपीडिताः अविवेकिनः परिभ्रमन्ति। अन्यत् स्पष्टार्थम्। केचित्तु दन्द्रव्यमाणा इति पाठमाश्रित्य विषयकामाभिना द्रुतचित्ता इत्यर्थं वर्णयन्ति ॥ ५ ॥

**न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्**। परलोकसाधनव्यापारः[3] अविवेकिनं प्रति न प्रकाशते। **प्रमाद्यन्तम्** अनवहितमनस्कं **वित्तमोहेन मूढं**— विषयाशावशीकृतमनोरथम्। **अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे।** अयमेव लोकोऽस्ति परलोको नास्तीति मन्यमानः मत्क्रिय(त्कार्य)माणयातनाविषयो भवतीत्यर्थः। व्यासार्यैः, 'संयमने त्वनुभूय' इति सूत्रे 'अयं लोको नास्ति पर उत मानी' इति पाठानुसारेण, अयं च लोकः परश्च लोको नास्तीत्यर्थो वर्णितः। तत्र पक्षे तस्येति शेषः

सामान्ये नपुंसकम्। विद्याभीप्सितमित्यत्र परनिपातइत्युपलक्षणम्। विद्ययाऽभीप्सितमिति विग्रहः। विद्या नचिकेतसमाप्तुमिच्छातीति मन्ये इत्यर्थे मन्येपदाद्यास्यात्। नन्दन्तादेशात्वादस्य अदादेशस्य प्रवृत्त्या अलोलुपतेति बहुवचने रूपं स्यात् न तु अलोलुपन्तेतीत्यत्र अदभावोऽपि छान्दस इत्युक्तम् ॥

५. अयं मन्त्रो मुण्डकेऽपि (१. ८.)दन्द्रम्यमाणा इत्यत्र जङ्घन्यमाना इति भेदः। पण्डितम्मन्यानां मानोऽहङ्कारो येषां ते इति विग्रहे ऐकपद्येऽपि शब्दस्साधुरेव ॥

६. सांपराय इति। 'सांपराये तर्तव्याभावा'दिति सूत्रम्। मुक्तो हि न परेतः किन्तु संपरेतः। ननु नास्तिकाभिमतो भूलोको दूरस्थितेन मृत्युना अयमिति कथं गृह्यते? नैवम्। धीस्थतया तद्ग्रहणात्। यद्वा अयमिति कृत्स्नः प्राकृतलोकः पर इतिचाप्राकृत उच्यते।

1. लोलुपन्तः माध्व, विद्याभीप्सितामिति च। 2. अन्तभावः क. अडभावः रा. 3. परलोक[illegible]

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः ।
आश्चर्यो [1]वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥
न नरेणावरेण[2] प्रोक्त एष सु[3]विज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥
नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापस्सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥

पूरणीयः । इतिश (उतश[?])ब्दश्चार्थः (चशब्दश्चाध्याहार्यः) । मानीत्यस्य दुर्मानीत्यर्थः । शिष्टपरिग्रहाभावादयं लोको नास्तीत्यस्योपपत्तिर्द्रष्टव्या ।[4] * दुर्मानी पुनःपुनर्वशमापद्यत इति उत्तरत्र संबध्यते * ॥ ६ ॥

**श्रवणायापि बहुभिर्यो न लभ्यः** । यः प्रसिद्धः परमात्मा सः(?) अनेकैःपुरुषैः श्रोतुमपि न लभ्य इत्यर्थः । श्रवणलाभोपि महासुकृतफलमिति भावः । **शृण्वन्तोऽपि बहवो यं न विद्युः** । नहि श्रोतॄणां सर्वेषां परमात्मप्रतिपत्तिस्सुलभेति [5]भावः । **आश्चर्यो वक्ता कुशलोऽस्य लब्धा** अस्य कुशलो वक्ता कुशलः प्राप्ता च दुर्लभ इत्यर्थः । **आश्चर्यो ज्ञाता कुशलानुशिष्टः** । कुशलेनाचार्येणानुशिष्टो ज्ञाताऽप्याश्चर्यः । 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इत्युक्तेरिति भावः ॥ ७ ॥

**न नरेणाऽवरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः** । अवरेण अश्रेष्ठेन प्राकृतेन पाण्डित्यमात्रप्रयोजनवेदान्तश्रवणेन **नरेण**—देहात्माभिमानिना एष आत्मा सुविज्ञेयो न भवति । कुतो हेतोः? **बहुधा चिन्त्यमानः** । वादिभिरिति शेषः । **अनन्यप्रोक्ते गतिरत्र नास्ति**—अनन्येन उच्यमानादात्मनोऽनन्येन तदेकान्तिना ब्रह्मात्म-साक्षात्कारिणा प्रोक्ते **अत्र** आत्मनि यादृशी अवगतिः, सा आत्मावगतिरवरेण प्रोक्ते नास्तीत्यर्थः । यद्वा **अत्र** संसारे **गतिः**चङ्क्रमणं नास्तीत्यर्थः । यद्वा **अनन्यप्रोक्ते** स्वयमवगते **गतिः** आत्मावगतिः नास्तीत्यर्थः । **अन्यप्रोक्त** इति पाठे अवरनरप्रोक्ते सति आत्मान्यव-गतिर्नास्तीत्यर्थः । ननु येन केनचिदुपदिष्टप्यूहापोहशालिनस्स्यादेवेत्यत आह—**अणीयान् ह्यतर्क्यमणुप्रमाणात्** । यतो अणोरप्यणीयान् आत्मा, अतः तत्स्वरूपं तर्कागोचरम् ॥ ८ ॥

तदेवाह—**नैषा तर्केण मतिरापनेया** । **एषा** आत्मविषयिणी मतिः तर्केण प्रापणीया नेत्यर्थः । अतः तर्ककुशलेनापि स्वयं ज्ञातुं न शक्येत्यर्थः । **प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ** । हे प्रेष्ठ ! प्रियतम, [6]स्वस्मादन्येनैव (गुणोत्कृष्टेन) गुरुणा उपदिष्टैव मतिः मोक्षसाधनज्ञानाय

9. आपनीयेत्यत्र आपनेयेति छान्दसम् । अपनेतव्या हन्तव्येति प्रकारान्तरमपि द्याङ्करे ॥

1. आश्चर्योऽस्य वक्ता माध्व 2. अवरः माध्व 3. सुज्ञेयो माध्व. 4. इदं वाक्यं क. कोशे नास्ति. 5. सुलभेति क. कोशे नास्ति । 6. स्वस्मादिति ख. घ. कोशयोर्नास्ति

जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्।
ततो मया ना[1]चिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥
कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम्।
स्तोमं [2]महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥
तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।

भवति। का पुनस्सा मतिरित्यत्राह– **यां त्वमापस्सत्यधृतिर्बतासि** इति। यां मतिं **त्वमापः**–आप्तवान्[3] सिषाधयिषिततया निश्चितवानित्यर्थः। **सत्यधृतिरसि**। सत्या अप्रकम्प्या धृतिर्यस्य स तथोक्तः। बतेत्यनुकम्पायाम्। **त्वादृङ्नो भूयान्नचिकेतः प्रष्टा।** त्वादृशश्शिष्यः अस्माकं भूयादित्यर्थः ॥ ९ ॥

पुनरपि तुष्ट आह–**जानाम्यहं शेवधिरित्यनित्यम्। शेवधिः** निधिः, कुबेराद्यैश्वर्यम्। एवञ्जातीयकं कर्मफललक्षणमनित्यमिति जानामि। **न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्। ध्रुवं तत्**–आत्मतत्त्वम्। **अध्रुवैः** अनित्यफलसाधनभूतैः अनित्यद्रव्यसाध्यैर्वा कर्मभिरित्यर्थः। **ततो मया नाचिकेतश्चितोऽग्निः अनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्।** एवं ज्ञानवता मया ब्रह्मप्राप्तिसाधनज्ञानोद्देशेन अनित्यैरिष्टकादिद्रव्यैर्नाचिकेतोऽग्निश्चितः। तस्माद्धेतोर्नित्यफलसाधनं ज्ञानं प्राप्तवानस्मीत्यर्थः। अतः ब्रह्मप्राप्तेर्ज्ञानैकसाध्यत्वस्य न विरोधः ॥ १० ॥

'त्वादृङ्नो भूयान्नचिकेतः प्रष्टा' इति पूर्वमन्त्रोक्तं नचिकेतसः श्रवणाधिकारं विवृणोति– **कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम्। स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः। क्रतोः**–कर्मणः **प्रतिष्ठाम्**-फलभूताम्, **जगतः कामस्याप्तिम्**—चतुर्मुखस्थानपर्यन्तसर्वलोकसंबन्धिस्त्र्यादिविषयानेककामप्राप्तिं च दृष्ट्वा। मोक्षस्वरूपमाह — **आनन्त्यमभयस्य पार**मित्यादिना। अविनाशित्वमत्यन्तनिर्भयत्वमपहतपाप्मत्वसत्यसङ्कल्पत्वादिमहागुणगणरूपस्तोमं उरुकीर्तिं स्थैर्यं च[4] मोक्षगतं दृष्ट्वा लौकिकान् कामान् प्रज्ञाशालित्वात् (प्रज्ञाशाली त्वं)त्यक्तवानसीत्यर्थः। यद्वा मोक्षरूपपरमात्मस्वरूप एव [5]सर्वकामावाप्तिं तत्रैव सकलजगदाधारत्वं क्रतोरनन्तफलरूपताञ्चेत्येवं सर्वं परमात्मविषयतया योजनीयम् ॥ ११ ॥

तृतीयं प्रश्नं प्रतिवक्ति–**तं दुर्दर्श**मित्यादिना मन्त्रद्वयेन। **दुर्दर्शं**–'श्रवणायापि बहुभिर्यो न लभ्यः' इत्युक्तरीत्या द्रष्टुमशक्यम्, **गूढं**–तिरोधायककर्मरूपाविद्यातिरोहितं सर्व-

१०. शेवधिरित्येवंभूतमनित्यं जानामीति योजना।
११. यद्वेत्यादि। इदम् आनन्त्यादिरूपां प्रतिष्ठां दृष्ट्वा कामाप्तिरूपां प्रतिष्ठामत्यस्राक्षीरिति योजनान्तरस्याप्युपलक्षणम् ॥

1. नचिकेतः माध्व 2. स्तोममहत् शाङ्क माध्व. 3. प्राप्तवानसि. ग. 4. चेति क. कोशे नास्ति. 5. सत्यकामावाप्तिं क.

**अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥**

**एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ।**
**स मोदते मोदनीयँ हि लब्ध्वा विवृतँ सद्म नचिकेतसं मन्ये ॥ १३ ॥**

भूतानुप्रविष्टम्, **गुहाहितं**—हृदयगुहावर्तिनम्, **गह्वरेष्ठम्**—[1]आत्मान्तर्यामिणम्, **पुराणम्**—अनादिम् **अध्यात्मयोगाधिगमेन**—विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधान[2]-मध्यात्मयोगः, 'यच्छेद्वाङ्मनसी प्राज्ञः,' 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह' इत्यादिना वक्ष्यमाणः । तेन योऽयमधिगमः जीवात्मज्ञानम्, तेन हेतुना **देवं** परमात्मानं **मत्वा**—[3]ध्यात्वेत्यर्थः । जीवात्मज्ञानस्य परमात्मज्ञानहेतुत्वादिति भावः । **हर्षशोकौ**—विषयलाभालाभ-[4]प्रयुक्तहर्षशोकौ जहातीत्यर्थः ॥ १२ ॥

एतच्छ्रुत्वा **संपरिगृह्य** मर्त्यः । **एतत्**—आत्मतत्त्वं श्रुत्वा, **संपरिगृह्य**—मननादिकं कृत्वेत्यर्थः । **प्रवृह्य धर्म्यम्**-कर्मसाध्यं शरीरादि **प्रवृह्य**-पृथक्कृत्य परित्यज्येत्यर्थः । **अणुमेतमाप्य** । **एतम्**-स्वात्मभूतम् । **अणुम्** सूक्ष्मतया चक्षुराद्यगोचरम् 'अणीयान् ह्यतर्क्यम्' इति निर्दिष्टं परमात्मानं देशविशेषे प्राप्य । **स मोदते मोदनीयँहि लब्ध्वा, सः** विद्वान् **मोदनीयं** प्रीतिविषयमपहतपाप्मत्वादिगुणाष्टकविशिष्टं स्वस्वरूपं लब्ध्वा **मोदते**—आनन्दी भवतीत्यर्थः । 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स तत्र पर्येति जक्षत् क्रीडन् रममाणः' इति श्रुत्यर्थोऽत्रानुसन्धेयः । एवं प्रश्नस्योत्तर[5]मुक्त्वा नचिकेतसं मोक्षार्हत्वेन स्तौति—**विवृतँसद्म नचिकेतसं मन्ये ।** नचिकेतसं प्रति ब्रह्मरूपं [6]सद्म धाम विवृतद्वारं प्रवेशार्हं मन्ये इत्यर्थः । 'तस्यैष आत्मा विशते(ति) ब्रह्मधाम' इति श्रुतेः ।

नतु 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इति श्रुत्यैकार्थ्याय 'अध्यात्मयोगाधिगमेन देवं मत्वे' त्यत्रापि परमात्मात्मकजीव [7]एव प्रतिपाद्यताम् । ततश्च, 'तं दुर्दर्श'मिति पूर्वखण्डोऽपि जीवपर एवास्तु । ततश्च 'श्रवणायापि बहुभिर्यो न लभ्यः' इति पूर्वसन्दर्भोऽपि परिशुद्धजीव-स्वरूपपर एवास्तु । ततश्च 'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्' इति परिशुद्धात्मविषय[8]गीतावचनैकार्थ्यमप्युपपद्यत इति चेत्—न, ब्रह्मजज्ञमिति मन्त्रे ब्रह्मजत्वरूपप्रकमश्रुतजीवलिङ्गबलेन चरम-

१३. प्रवृह्य—वृह्—उद्यमने । ननु नचिकेतसं ब्रह्मप्रवेशार्हविवृतद्वारत्वेन मन्य इत्यर्थः कुतो नेत्यत्र स्तोत्रकारी संवादं दर्शयति तस्यैष इति ॥

1. अन्तर्यामिणं ग.घ. 2. समवधानं ग.घ. 3. ध्यात्वेति ग. कोशे नास्ति. 4 प्रसक्त. ग. 5. प्रश्नोत्तरं ग. 6. सद्मेत ग. कोशे नास्ति. 7. एवेति ग. कोशे नास्ति । 8. विषय इति गीतावचन क.

**अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद ॥ १४ ॥**

श्रुतदेवशब्दस्य देवात्मकत्वरूपार्थाश्रयणेऽपि 'तं दुर्दर्श'मिति मन्त्रे तादृशार्थलिङ्गाभावेन देवमित्यस्य देवात्मकमित्यर्थाश्रयणायोगात् । एतदेवाभिप्रेत्य भगवता भाष्यकृता, 'गुहां प्रविष्टा' विति सूत्रे, "परमात्मनस्तावत् 'तं दुर्दर्शं गूढमनुप्रविष्ट'मिति गुहाप्रवेशो दृश्यत" इत्युक्तम् । तथैवायं मन्त्रः परमात्मपरतया व्यासार्यैरपि विवृतः । गह्वरेष्ठमिति पदेन तु परमात्मनः गह्वरशब्दितदुर्विज्ञेयपरिशुद्धात्मस्वरूपशरीरकत्वमप्युक्तम् । इयांस्तु विशेषः— ब्रह्मजज्ञमिति मन्त्रे परमात्मात्मकपरिशुद्धजीवस्वरूपं प्रतिपाद्यते । 'तं दुर्दर्श'मिति मन्त्रे तु जीवशरीरकपरमात्मस्वरूपं प्रतिपाद्यत इति न तयोरैकार्थ्यहानिः ॥ १३ ॥

'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' 'एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयं हि लब्ध्वा' 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति'इति प्रदेशेषु धर्मफलविलक्षणतया ज्ञानसाध्यतया प्राप्यतया च[1] निर्दिष्टस्य प्राप्यस्य स्वरूपं च, उक्तप्रदेशेष्वेव धर्मविलक्षणतया 'मत्वा'इति प्रतिपन्नस्योपायस्य स्वरूपं च, 'धीरो हर्षशोकौ जहाती'त्यत्र धीर इति प्रतिपन्नस्य प्राप्तुश्च (?) स्वरूपं च शोधयितुं पृच्छति—**अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥** ननु भाष्ये "देवं मत्वे'त्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य, 'अध्यात्मयोगाधिगमेने'ति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च, 'मत्वा धीरो हर्षशोकौ जहाती'ति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपशोधनाय पुनः पप्रच्छ, अन्यत्र धर्मादिति" इत्युक्तेः कथं तद्विरुद्धतया'धीर' इति निर्दिष्टस्य प्राप्तुरित्युच्यत इति चेन्—मैवं वोचः—'अध्यात्मयोगाधिगमेने' ति वेदितव्यतया निर्दिष्टमात्मशब्दवाच्यं प्रजापतिविद्याप्रतिपन्नमुपास्यं प्राप्यभूतं परिशुद्धस्वस्वरूपमेव । अतस्तस्यापि प्राप्यनिर्देशकत्वमेव । वस्तुगत्या तस्य [2]प्राप्तृभिन्नत्वात्, 'प्राप्तुः प्रत्यगात्मनश्चे'ति भाष्यं न विरोत्स्यते । अत[3] एव "प्रथमं तावत् प्राप्तुः प्रत्यगात्मनः स्वरूपमाह—न जायते म्रियते वा विपश्चिदिति" इत्युत्तरभाष्यमपि न विरोत्स्यते[4] । न हि 'न जायते म्रियते वा विपश्चित्' इति मन्त्रप्रतिपाद्यस्य विपश्चिच्छब्दितपरिशुद्धस्वरूपस्य प्राप्तृरूपतोपपत्तिः । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः', 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मन्त्रप्रतिपाद्यस्यैव प्राप्तृरूपत्वात् । तथैव 'विशेषणाच्च' इति सूत्रभाष्ये प्रतिपादितत्वात् । अत एव प्राप्यप्राप्त्रैकाधिकरण्यनिर्देशपरे गुहामन्त्रे

1. चेति ग. कोशे नास्ति. 2. प्राप्तुरभिन्नत्वात् ग. घ. 3. अतः प्रथमं ग. 4. उपपद्यते घ. न विरोधि. ख.

'छायातपा'वित्यज्ञत्ववाचिना छायाशब्देन निर्देशो दृष्टः, न तु विपश्चिच्छब्देन। अतः यथोक्त एवार्थः।

अयं मन्त्रः व्यासार्यैः 'त्रयाणा'मिति सूत्रे विवृतः। "**धर्मः** उपायः **धर्मादन्यत्र**—प्रसिद्धोपायविलक्षण उपाय इत्यर्थः। **अधर्मः**—धर्मेतरः उपेयः। **अधर्मादन्यत्र**—प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः। **अस्मादि**ति बुद्धिस्थः तत्साधको विवक्षितः। स एवोपैता। स हि प्रसिद्धोपेतृ (साधक) विलक्षणः, साधकावस्थायामितरफलविरक्तत्वात्, फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च। **कृताकृतादि**ति धर्मादीनां विशेषणम्। कृताकृताद्धर्मादेर्विलक्षणं भूताच्च भव्याच्च धर्मादेर्विलक्षणं यदित्यर्थः" इत्येकां व्याख्यां कृत्वा, तस्मिन्पक्षे तु कृताकृतात् भूताद्भव्याच्च धर्मादन्यत्र तादृशादधर्मादन्यत्र तादृशादस्माच्चान्यत्र इत्यन्यत्रशब्दत्रयेणैवोपपत्तौ, अन्यत्र भूताद्भव्याच्चेत्यन्यत्रशब्दवैयर्थ्यम्, उपायस्य कालत्रयपरिच्छिन्नतया तत्र कालत्रयपरिच्छिन्नवैलक्षण्यानन्वयं च पर्यालोच्य यद्वेत्यादिना अपरा व्याख्या कृता। तदुच्यते—"यद्वा धर्मादधर्माच्चान्यत्र यदिति उपासनप्रश्नः; पुण्यपापरूपसाधनविलक्षणत्वादुपासनस्य। कृताकृतात् भूताच्च भव्याच्चान्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टम्। उपेतुरपि चेतनस्य नित्यत्वात् प्राप्यान्तर्भावाच्च तत एव तस्यापि तन्त्रेण प्रश्नः। 'तदन्तर्गतं च प्राप्तुः स्वरूप'मिति हि वक्ष्यते। [1]तत्र (त्रय इति?) यत्तच्छब्दौ त्रितयपराविति भावः" इति॥

नन्वस्मिन्नपि पक्षे प्रष्टव्यद्वयपरत्वाश्रयणमपि क्लिष्टमेव, अन्यत्र धर्मादन्यत्राधर्मादिति प्रक्रमस्थान्यत्रशब्दद्वयसामानाधिकरण्यवत् अन्यत्रास्मात्कृताकृतात् अन्यत्र भूतादित्युपरितनान्यत्रशब्दद्वयस्यापि सामानाधिकरण्यस्यैव प्रतीतेः। यदि तत्र धर्माधर्मविलक्षणं यच्च, कालत्रय(?) विलक्षणं यच्चेति चशब्दद्वयमश्रोष्यत, तदा अन्यत्रशब्दयुगद्वयस्य स्वरसतः प्रतीतं सामानाधिकरण्यं पर्यत्यक्ष्यत। अतः प्रक्रमरीत्यनुसारिप्रतीतसमानाधिकरण्यभङ्गे कारणाभावात् अन्यत्र धर्मादन्यत्राधर्मादित्ययमप्यंशः प्राप्यब्रह्मपर एवाऽस्तु। ननु 'नायमात्मा प्रवचनेन लभ्यो न मेधया' इत्युपायविशेषप्रतिवचनदर्शनेनोपायविशेषप्रश्नस्याप्यत्रैवान्तर्भाव्यतया चशब्दाभावेप्यन्यत्रशब्दयुगद्वयस्य सामानाधिकरण्यं भञ्जनीयमिति चेन्न। प्रतिवचनेपि 'नायमात्मा प्रवचनेन लभ्य' इति प्रीतिरूपापन्नज्ञानैकलभ्यत्वलक्षणप्राप्यधर्मविशेषोपदेशस्यैव दर्शनेनोपायप्रधानप्रतिवचनादर्शनात्। 'नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' 'यस्त्वविज्ञानवान् भवति अमनस्कः सदाऽशुचिः। न स तत्पदमाप्नोति' इति प्रतिवचनदर्शनादधर्मादन्यत्रेति प्रसिद्धोपायविरोधिविलक्षणविरोधिप्रश्न[2] इत्यपि किं न स्यात्। प्राप्यस्य प्रीतिरूपापन्नज्ञानैकोपायकत्वकथनेन उपाये[3] प्रीतिरूपापन्नत्वरूपविशेषः फलिष्यतीति चेत्, फलतु नाम।

1. अत्र ख. 2. प्रसिद्धोपायविरोधिप्रश्न ग. घ. 3. उपेये. ख.

**सर्वे वेदा यत् पदमामनन्ति तपाँसि सर्वाणि च यद्वदन्ति ।**

नैतावतोपायस्य प्रश्नप्रतिवचनप्रधानविषयत्वं वक्तव्यमित्यस्ति । न हि ? 'किं देवदत्तभवन' मिति प्रश्नस्य वा 'बहुचम्पकालंकृतनिष्कुटं (ट) द्वारोपान्तलिखितशङ्खचक्रपद्म (शङ्खपद्म) कं देवदत्तभवन' मिति तत्प्रश्नप्रतिवचनस्य वा निष्कुटद्वारोपान्तप्रधानकत्वं कश्चिदभ्युपैति । अतो अन्यत्रधर्मादन्यत्राधर्मादित्यपि अन्यत्रशब्दचतुष्टयसामानाधिकरण्यलिप्सया धर्माधर्मसाध्य-विलक्षणब्रह्मविषय एवायमिति चेत्—

अत्रोच्यते—'असौ देवदत्तादुत्पन्नो न भवति, अपि तु यज्ञदत्तात्' इति वाक्यं श्रुत्वा 'देवदत्तादन्यं यं पश्यसि तं मे ब्रूही' ति प्रवृत्तस्य प्रति (प्रश्न ?) वचनस्य देवदत्ता-न्ययज्ञदत्तपरत्ववत् लक्षणया देवदत्तपुत्रान्यप्रश्नपरत्वस्याप्रतीतेः, तद्वत् कर्मसाध्यं न ब्रह्म, अपि तु ज्ञानसाध्यमित्युपदेशानन्तरप्रवृत्तस्य धर्मादन्यत्रेति प्रश्नस्य धर्मविलक्षणज्ञानरूपोपायपरत्व-मेव युक्तम्, न तु धर्मशब्दलक्षणया धर्मसाध्यविलक्षणब्रह्मपरत्वम् । तथा अधर्मादन्यत्रेत्यत्रापि सामानाधिकरण्येनोपायपरत्वमेव निश्चितम् । कालत्रयपरिच्छिन्नविलक्षणवाचके उपरितनान्यत्र-शब्दद्वये कालत्रया (य ?) परिच्छिन्नोपायपरामर्शासंभवात् सामानाधिकरण्यभङ्गेन प्राप्यपरत्वमेव युक्तम् । नीलो दीर्घो रक्तो ह्रस्वः कः इत्युक्त नीलदीर्घपदयोः अविरोधात् सामानाधिकरण्यं सिद्ध्यति । रक्तह्रस्वयोश्च परस्पराविरोधात् सामानाधिकरण्यं सिद्ध्यति । न तु चतुर्णां चशब्दाभावेपि सामानाधिकरण्यं दृष्टम् । अपितु पुरुषद्वयप्रश्नपरत्वमेव । एवमिहापि यच्छब्दान्वितचशब्दद्वयाभावेपि न सामानाधिकरण्यमवगम्य(ग्राह्य)ते । अस्तु वा भवदुक्तरीत्या सामानाधिकरण्यम् । अथापि प्रश्नप्रतिवचनयोः, द्वितीयव्याख्यायां उपेयप्रश्ने उपेतन्तर्भाववत् उपायस्याप्यन्तर्भूतत्वात् 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' ति सूत्रनिर्दिष्टोपायोपेतृ प्रश्नप्रति-वचनस्य सुघटिततया क्षतेरभावात्; 'तत्ते पदं सङ्ग्रहेण ब्रवीमि' इति पदशब्दितप्राप्यस्यैव प्रतिवचनप्रतिपाद्यत्वस्य स्पष्टं प्रतीतेरित्यलं प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः ॥ १४ ॥

एवं प्राप्यं[1] पृष्टो मृत्युः 'न जायते म्रियत' इत्यादिना विस्तरेण प्रतिपिपादयिषुः इदानीं श्रोतुरादरातिशयसिद्ध्यर्थं प्राप्यवैभवं प्रकाशयन् सङ्ग्रहोक्तिं प्रतिजानीते **सर्वे वेदा यत्पदमामनन्ति** । पद्यते गम्यत इति व्युत्पत्त्या पदशब्दः प्राप्यस्वरूपवाची । यत्स्वरूपं सर्वे वेदाः साक्षात्परम्परया वा प्रतिपादयन्तीत्यर्थः । अनेन—

'अस्या उपनिषदः प्रजापतिविद्यावत् परिशुद्धात्मस्वरूपविषयतैवास्तु—'न जायते म्रियते वा विपश्चित्', 'हन्ता चेन्मन्यते हन्तुम्' इति मन्त्रद्वयस्य परिशुद्धात्मस्वरूपपरत्वस्य सम्प्रतिपन्नत्वात् । 'अणोरणीयानि'ति मन्त्रद्वय(मन्त्र?)स्यापि 'अविनाशि तु तद्विद्धि येन

१ नहि इति कुत्राप्यदृष्टं न पौचित्यादभिनिवेशितम् । 1. प्राप्यमित्यधिकं ख.

**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ओमित्येतत् ॥ १५॥**

सर्वमिदं ततम्' । 'निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम्' इति स्मृतिवचनाभ्यां सर्वान्तः-प्रवेशयोग्या (ग्ये?) तिसूक्ष्मतया व्यापकतया च प्रतिपादिते प्रत्यगात्मनि उपपन्नत्वात्, 'सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्' इति गीतानुसारेण 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इति वचनस्यापि तत्रैव युक्तत्वात्, 'ग्रसिष्णु प्रभविष्णु च' इत्युपबृंहणानुसारात् 'यस्य ब्रह्म च क्षत्रं च' इति मन्त्रस्यापि तत्र सङ्गतार्थत्वात्, 'द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदं' 'प्रसूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत् परमं च यत्पदम्' इति स्मृत्यनुसारेण 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मन्त्रस्यापि परिशुद्धात्मस्वरूपे सङ्गतार्थत्वात्, 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्' इति स्मृत्यनुसारेण 'सा काष्ठा सा परा गतिः' इति मन्त्रस्यापि परिशुद्धात्मविषयत्वसंभावात्, 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इति स्मृत्यनुसारेण, एष सर्वेषु भूतेष्विति मन्त्रस्यापि परिशुद्धस्वरूपपरत्वोपपत्तेः, 'पराञ्चि खानि' इति मन्त्रे परागर्थनिन्दाद्वारेण प्रत्यगर्थस्यैव प्रकरणप्रतिपाद्यत्वाविष्करणात्, 'तिष्ठन्तं परमेश्वरम्' इति गीतानुसारेण 'ईशानो भूतभव्यस्य' इति मन्त्रस्यापि तत्रैव शुद्धात्मस्वरूपे सङ्गतार्थत्वात्, भेदप्रसक्तिमति प्रत्यगात्मस्वरूप एव 'नेह नाने'ति निषेधस्यापि सङ्गतार्थत्वात्, 'अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः' इति स्मृ(तिप्र)त्यभिज्ञापकस्य 'वायुर्यथैको भुवनं प्रविष्ट' इति मन्त्रस्यापि परिशुद्धस्वरूपपरत्वसंभवात्, 'सर्वतः पाणिपादं तत्' इति गीताभाष्ये, 'ब्रह्मणा परमसाम्यमापन्ने परिशुद्धात्मस्वरूपे सर्वतःपाणिपादादिकार्यकर्तृत्वं संभवती'ति उपपादितत्वात्, 'एकं बीजं बहुधा यः करोति' इति मन्त्रस्यापि परिशुद्धपरत्वेऽनुपपत्त्यभावात्, 'न तत्र सूर्यो भाति' इति मन्त्रस्यापि 'न तद्भासयते सूर्यः' 'ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते' इति गीतावचनेन परिशुद्धात्मस्वरूपपरत्वस्य युक्तत्वात्, 'तं स्वाच्छरीरात्प्रवृहे' दिति औपसंहारिकमन्त्रस्य परिशुद्धात्मपरत्व एव स्वारस्यात् कृत्स्नाया अप्युपनिषदः प्रजापति-वाक्यवत् प्रत्यगात्मस्वरूपमात्रपरत्वोपपत्तौ प्रत्यगात्मपरमात्मरूपप्राप्यद्वयपरत्वक्लेशाश्रयणं वृथा—

इति शङ्का प्रत्युक्ता । सर्ववेदप्रतिपाद्यस्यैव 'तत्ते पदं सङ्ग्रहेण ब्रवीमी'ति वक्तव्यत्वेन प्रतिज्ञानात् परमात्मस्वरूपप्रतिपादकवेदभागप्रतिपाद्यत्वस्य शुद्धस्वरूपे असंभवात्, शुद्धस्वरूपस्याप्यन्तर्यामिणः परमात्मस्वरूपस्य शुद्धस्वरूपप्रतिपादकभागेनापि प्रतिपाद्यत्वसंभवादिति द्रष्टव्यम् ।

**तपांसि सर्वाणि च यद्वदन्ति ।** **तपांसि**— तपःप्रधाना उपरितनभागा इति व्यासार्यैर्व्याख्यातम् । **यदिच्छन्तो ब्रह्मचर्यं चरन्ति ।** **ब्रह्मचर्यं**—गुरुकुलवासस्त्रीसङ्गराहित्यादिलक्षणं यदिच्छन्तोऽनुतिष्ठन्ति । **तत्ते पदं सङ्ग्रहेण ब्रवीमि ।** सङ्गृह्यतेऽने-

**१५. पदं प्राप्यम् सङ्ग्रहेण संग्राहकाक्षरेण । एतत् संग्राहकाक्षरम् । भाष्ये तपःप्रधाना**

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥**
**एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥**
**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**

---

नेति सङ्ग्रहशब्दः[1] । प्राप्यवस्तव्यवप्रतिज्ञाने [illegible] अर्थात् प्रणव[illegible] लाभात् 'प्रणवं प्रशस्ये'ति भाष्यस्य च, 'सर्वे वेदा' 'इत्यादिपादत्रयोक्तब्रह्म[illegible]कतया प्रशस्येत्यर्थः' इति श्रुतप्रकाशिकावचनस्य च [illegible] द्रष्टव्यम् । सङ्ग्रहेण [illegible]पदकं किमित्यत आह—**ओमित्येतदिति** । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति प्रणवस्य ब्रह्मवाचकत्वात् । [illegible] सजीववाचितया उपायोपेत्रोरप्युपदिष्टत्वमस्तीति द्रष्टव्यम् ॥ १५ ॥

एवं वाचकं प्रणवं द्वाभ्यां मन्त्राभ्यां स्तौति—**एतद्ध्येवाक्षरं ब्रह्म** । * 'ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीते'ति ब्रह्मप्राप्तिसाधनध्यानालम्बनत्वादिदमेवाक्षरं * ब्रह्मप्राप्तिसाधनत्वात् ब्रह्म । **एतद्ध्येवाक्षरं परम्** । जप्येषु ध्येयेषु च श्रेष्ठमित्यर्थः । **एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्** । एतदक्षरमुपास्य अनेनोपासनेन इदं फलं मे भूयादिति (यो[2]) यत् कामयते, तस्य तद्भवतीत्यर्थः ॥ १६ ॥

**एतदालम्बनं श्रेष्ठम्**—एतदोंकाररूपमालम्बनं श्रेष्ठम्—ध्यानादेरिति शेषः । अत एव **एतदालम्बनं परम्**—एतदालम्बनकं ध्यानादि सर्वोत्कृष्टमित्यर्थः । **एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते** । स्पष्टोऽर्थः ॥ १७ ॥

प्रथमं तावत् प्रत्यगात्मस्वरूपमाह—**न जायते म्रियते वेत्यादिना** मन्त्रद्वयेन । इदं च प्रस्तुत्य व्यासार्यैरित्थं ह्युक्तम्— 'इदं मन्त्रद्वयं तावदेकविषयम्, 'न हन्यते हन्यमाने शरीरे' इत्येतद्विवरणरूपत्वात् द्वितीयमन्त्रस्य । हन्ता चेदिति मन्त्रश्च जीवविषय एव; लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात् । परमात्मा हि प्रत्यक्षागोचरः । कथं तस्मिन्वध्यतादिप्रतिपत्तिः । अहमेनं हन्मि, अयं मां हन्तुमागच्छतीति वध्यघातुकभावाभिमानो हि देहिनां जीवविषय एव । ननु 'नास्य जरयैतज्जीर्यति' इतिवत् परमात्मनोपि हननप्रतिषेध उपपद्यते । सत्यम्, तत्र दहराकाशस्य देहान्तःस्थित्या शङ्कितविकारनिषेध उपपद्यते । इह तु लोकसिद्धा भ्रान्तिरनूद्य निरस्यते । न हि परमात्मनि वध्यघातुकभावभ्रान्तिः कस्याप्यस्ति । अतः अनुवादनिषेधावनुपपन्नौ । 'न जायत' इति मन्त्रश्च

---

इति पदं ज्ञानप्रधाना इति श्रुतप्रकाशिकार्थानुवादः । उपदिष्टत्वमिति । तथाचोपायोपेतृसंग्राहकेणेति सङ्ग्रहशब्दार्थः । प्रापकप्राप्तृसङ्ग्राहकेण प्रधानप्रतिपाद्यं प्राप्यं ब्रवीमीति श्रुत्यर्थं इति भावः ॥

---

1. 'संगृह्यते—शब्द' इतिस्थाने, सङ्ग्रहेण संक्षेपेणेत्यर्थः इति ख. * एतन्मध्यगतं ख. कोशे नास्ति ।

**अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने [1]शरीरे ॥ १८ ॥**
**हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायँ हन्ति न हन्यते ॥ १९ ॥**

तेनैकार्थः । अतः मन्त्रद्वयमपि जीवविषयकमेवे'ति । अक्षरार्थस्तु—**न जायते म्रियते वा विपश्चित्**—विपश्चित्त्वार्होऽयमिदानीमपि जननमरणशून्य इत्यर्थः । **नायं कुतश्चित्**—उत्पादकशून्यः । **न बभूव कश्चित्**—पूर्वमपि मनुष्यादिरूपेण जननशून्यः । न जायत इत्यत्र हेतुमाह—**अज** इति । न म्रियत इत्यत्र हेतुमाह—**नित्य** इति । न कुतश्चिदित्यत्र हेतुमाह—**शाश्वत** इति । 'पूर्वं न बभूवे'त्यत्र हेतुमाह–**पुराण** इति । ननु कथमस्य नित्यत्वम्, शरीरान्तर्वर्तिनश्शरीरविनाशानुविनाशित्वावश्यंभावादित्यत आह—**न हन्यते हन्यमाने शरीरे** । स्पष्टोऽर्थः ॥ १८ ॥

तदेवोपपादयति—**हन्ता चेन्मन्यते हन्तुम्**–अहमेनं हनिष्यामीति देहात्मदृष्ट्या मन्यते चेदित्यर्थः । **हतश्चेन्मन्यते हतम्**–छिन्नदेहावयवः देहात्मदृष्ट्या आत्मानम्, हतोऽहमिति मन्यते चेदित्यर्थः । **उभौ तौ न विजानीतः** । आत्मस्वरूपमिति शेषः । **नायं हन्ति** । आत्मानमिति शेषः । **न हन्यते**—आत्मस्वरूपमिति शेषः । न च वेदान्तवेद्यपरिशुद्धात्मस्वरूपे कथं हननादिप्रसक्तितत्पूर्वकनिषेधाविति वाच्यम् । तस्यैव क्षेत्रज्ञतया (क्षेत्रीभूततया) तत्प्रयुक्ततत्संभवादिति द्रष्टव्यम् ।

इमौ मन्त्रौ प्रस्तुत्य वियत्पादे चिन्तितम् । तत्र हि 'वायुश्चान्तरिक्षं चैतदमृत'मिति वाय्वन्तरिक्षयोर्नित्यत्वश्रवणेपि 'आत्मन आकाशस्संभूतः आकाशाद्वायुः' इति तयोरुत्पत्तिश्रवणात् एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं सर्वस्य वस्तुनो ब्रह्मविकारत्वस्यावश्याश्रयणीयत्वाच्च यथोत्पत्तिरङ्गीक्रियते, एवं जीवानां नित्यत्वश्रवणेपि 'तोयेन जीवान्विससर्ज भूम्याम' 'प्रजापतिः प्रजा असृजत' इति जीवानामपि सृष्टिश्रवणात् एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं[2] जीवस्यापि सृष्टिरभ्युपगन्तव्येति पूर्वपक्षे प्राप्ते—'नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः' इति सूत्रेण सिद्धान्तितम् । आत्मा नोत्पद्यते 'न जायते म्रियते वा विपश्चित' 'ज्ञाज्ञौ द्वावजौ' इत्युत्पत्तिनिषेधश्रुतेः । ताभ्य एव श्रुतिभ्यः नित्यत्वावगमाच्च । न चोत्पत्तिश्रुतिसर्वविज्ञानप्रतिज्ञाविरोधश्शङ्क्यः । स्वरूपस्य नित्यत्वेऽपि ज्ञानसङ्कोचविकासलक्षणान्यथाभावरूपावस्थान्त-

१८. द्वितीयपादस्य 'नायं भूत्वा भविता वा न भूय' इत्यत्र गीताभाष्यानुसारेण, 'कश्चिदात्मा कल्पादिकाले कुतश्चिद्भूत्वा कल्पान्ते म्रियत इति ने'त्यर्थवर्णने भूत्वेत्यध्याहारं, बभूवेति भूतकालायोगञ्च विमृश्य स्वरसार्थ एव दर्शितः । अत एवैकरूपार्थवर्णननिर्बन्धाभावात् उत्तरार्धावतारणादिकमपि किञ्चिदन्यथैव । अन्ततस्तात्पर्यमेकमेवेति ध्येयम् ।

१९. कर्त्रधिकरणे (२–३–५) "हन्तारमात्मानं जाम"मिति भाष्यव्याख्याने श्रुतप्रकाशिका—"हन्तुमितिपदम् उदन्ताद्वितीयान्तम् । 'सेतुं जन्तु'मितिवत् । हन्तारमित्यर्थे" इति ॥

1. हन्यमानेऽपि देहे, भाष्य । 2. चकारः क. कोशे.

रापत्तिसत्त्वेन उत्पत्तिश्रुतेः सर्वविज्ञानप्रतिज्ञायाश्चोपपत्तेः । उत्पत्तिनिषेधश्रुतेश्च स्वरूपान्यथाभावलक्षणोत्पत्त्यभावपरतया अविरोधात् । इयांस्तु विशेषः । चिदचिदीश्वराणां त्रयाणामपि अवस्थान्तरापत्तिलक्षणोत्पत्तिरूपो विकारोऽस्त्येव । तथाप्यचेतनानां स्वरूपान्यथाभावलक्षणा उत्पत्तिः । जीवानां तु सा नास्ति । अपितु ज्ञानसङ्कोचविकासलक्षणस्वभावान्यथाभावरूपा उत्पत्तिः । ईश्वरस्य तु तत्तन्नियन्तृत्वाद्यवस्थासत्त्वेपि उक्तलक्षणानिष्टविकारद्वयाभावात् 'नित्यो नित्यानाम्' इति परमात्मन इतरविलक्षणनित्यत्वोक्तिरिति द्रष्टव्यम् । वर्णितश्च सूत्रार्थः ।

[1]ननु 'न जायते म्रियते वा' इति श्रुतिप्रतिषिद्धां जीवोत्पत्तिं 'वासुदेवात् सङ्कर्षणो नाम जीवो जायते' इति प्रतिपादयतः पाञ्चरात्रस्य कथं प्रामाण्यमिति चेत्—अस्याः शङ्कायास्तर्कपादे निराकृतत्वात् । तथाहि—'वासुदेवात्संकर्षणो नाम जीवो जायते' इति जीवोत्पत्तिः [पाञ्चरात्रे] प्रतिपाद्यते । सा च जीवे न संभवति । तथा 'सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते' इति कर्तुर्जीवात्करणस्य मनसः उत्पत्तिः श्रूयमाणाऽपि न संभवति । कर्तुर्जीवात्करणोत्पत्तेः, 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इति मनसो ब्रह्मोत्पत्तिप्रतिपादकश्रुतिविरुद्धत्वादिति, 'उत्पत्त्यसंभवात्' 'न च कर्तुःकरणम्' इति [2]द्वाभ्यां सूत्राभ्यां पूर्वपक्षं कृत्वा 'विज्ञानादिभावे वा तदप्रतिषेधः' 'विप्रतिषेधाच्च' इति द्वाभ्यां सूत्राभ्यां सिद्धान्तितम् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । विज्ञानं च तदादि च विज्ञानादि । ननु [च] 'क्यन्तो घुः' इति आदिशब्दस्य नित्यपुल्लिङ्गत्वात् कथमेतदिति चेत्—नायं घुः, अपि तु 'अद भक्षणे' इत्यस्मादावश्यकार्थे णिनिप्रत्यये 'आदि' इति रूपं सिद्ध्यति । तेन च निखिलजगत्संहर्तृत्वमुखेन कारणत्वं प्रतिपाद्यत इति द्रष्टव्यम् । **आदि विज्ञानं** परमात्मेत्यर्थः । 'सङ्कर्षणो नाम जीवो जायते' इति श्रुतस्य जीवशब्दार्थस्य तदभिमानिपरमात्मभावे सति शास्त्रप्रामाण्याप्रतिषेधस्सिद्ध्यति । परमात्मनश्च जननं नाम स्वेच्छाधीनशरीरपरिग्रहः । तस्मिन्नेव पञ्चरात्रतन्त्रे 'स ह्यनादिरनन्तश्च' इति जीवोत्पत्तेर्विशेषेण प्रतिषिद्धतया तद्विरुद्धाभिधानासंभवात् 'सङ्कर्षणो नाम जीवो जायते' इत्यनेन जीवाभिमानिसङ्कर्षणस्य इच्छाधीनशरीरपरिग्रहरूपोत्पत्तिः प्रतिपाद्यत इति न पाञ्चरात्राप्रामाण्यमिति सूत्रयोरर्थः ।

ननु सांख्यपाशुपताद्यधिकरणवत् इदमप्यधिकरणं पाञ्चरात्रप्रामाण्यप्रतिषेधकं किं न स्यादिति चेत्—वेदोपबृंहणाय भारतसंहितां कुर्वता बादरायणेन—

इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् ॥

1. अयं ख पाठः । अत्र श्रुतिप्रतिषिद्धां जीवोत्पत्तिमित्येतत्स्थाने, श्रुतिप्रतिषिद्धा जीवोत्पत्तिः इति घ पाठः । 'नन्वित्यादि—प्रतिपाद्यतइत्यन्तस्थाने ननु न जायते म्रियते वेति श्रुतिप्रतिषिद्धा जीवोत्पत्तिः वासुदेवात्संकर्षणो नाम जीवो जायत इति श्रीपाञ्चरात्रे प्रतिपाद्यते इति ग. पाठः ।

2. सूत्रद्वयेन ग.

नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ।
आरण्यकं च वेदेभ्यः ओषधीभ्यो यथाऽमृतम् ॥

इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम् ॥

इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥

भविष्यति प्रमाणं वै एतदेवानुशासनम् ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥

अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ।
सात्वतं विधिमास्थाय गीतस्सङ्कर्षणेन यः ॥

अस्मात्प्रवक्ष्यते धर्मान् मनुस्स्वायंभुवस्तथा ॥

इत्यादिभिर्वचनैः बहुषु स्थलेषु पाञ्चरात्रप्रामाण्यं प्रतिष्ठापितवता शारीरकशास्त्रे तत्प्रामाण्यं निराक्रियत इत्यस्यासङ्गतत्वात् । नन्वेवम्—

'एवं तत्त्वमिदं कृत्स्नं सांख्यानां विदितात्मनाम् ।
यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥

यस्मिन्न विभ्रमाः केचित् दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥'

इति कापिलमतस्य भारते भ्रमादिदोषाभावप्रतिपादनात्, 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागमं यथान्यायं निष्ठा नारायणः प्रभुः' इति सांख्ययोगपाशुपतादीनामपि नारायणनिष्ठत्वप्रतिपादनात्, 'तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः' इति तच्छास्त्रकर्तॄणामपि नारायणप्रतिपादकत्वस्य प्रतिपादनात्, 'सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः' इति सर्वेषामप्यात्मप्रमाणत्वप्रतिपादनाच्च, 'सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमम्' इति पाञ्चरात्रदृष्टान्तेन इतरशास्त्राणामपि प्रामाण्यप्रतिपादनाच्च तद्वदेव सांख्यपाशुपताद्यागमानामपि प्रामाण्यं न निराक्रियत इति चेत्—सत्यम् । भ्रमविप्रलिप्सादिराहित्यं शास्त्रकर्तॄणाम्, परमतात्पर्यं च नारायण एवेति समानम् । तथापि अबहुश्रुततया तद्वक्तॄणां हृदयमजानन्तः आपातप्रतिपन्नमेवार्थं तात्त्विकं मन्यमाना ये प्रत्यवतिष्ठन्ते, तान् प्रति सांख्याद्यागमानामापातप्रतिपन्नार्थमात्रपरत्वमन्वारुह्य सूत्रकृता तन्निरसनं कृतम् । [1]पाञ्चरात्रशास्त्रे तु परतत्त्वहितपुरुषार्थानामेवाऽऽपाततोपि प्रतीतेः वेदविरुद्धनिमित्तो-

1. पञ्चरात्रशास्त्रं ग. अत्रोपरि पञ्चरात्रमिति नास्ति ।

**अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ।**

पादानभेदाद्यप्रतीतेश्च कृत्स्नं पञ्चरात्रं प्रमाणमेवेति नैकदेशेऽप्यप्रामाण्यशङ्कावकाश इति द्रष्टव्यम् । एवमेव व्यासार्यैरुक्तम् । प्रकृतमनुसरामः ॥ १९ ॥

एवं मन्त्रद्वयेन प्रत्यगात्मस्वरूपं विशोध्य तदात्मभूतपरमात्मस्वरूपमाह— **अणोरणीयान् महतो महीयान्** । **अणोः**— सर्वाचेतनापेक्षया सूक्ष्माचेतनात् अणुतरः ततोऽपि सूक्ष्मः तदन्तःप्रवेशयोग्य इत्यर्थः । **महतः**— आकाशादेरपि महत्तरः स्वाव्याप्तवस्तुरहित इत्यर्थः । **आत्माऽस्य जन्तोर्निहितो गुहायाम्** । **अस्य जन्तोः**— 'न जायते म्रियते वे'ति मन्त्रद्वयनिर्दिष्टस्य चेतनस्य[1] । **आत्मा**— अन्तःप्रविश्य नियन्तेत्यर्थः । अतश्च पूर्वमन्त्रद्वयनिर्दिष्टात् प्रत्यगात्मस्वरूपात्, अणोरणीयानिति मन्त्रसन्दर्भप्रतिपाद्योऽन्य एवेति सिद्धम् । न च अस्य जन्तो रित्यस्य हृदयगुहावाचिना संबन्ध(न्धि?)सापेक्षेण गुहायामित्यनेनैवान्वितत्वेन[2] न आत्मेत्यनेनान्वय इति शङ्क्यम् । आत्मशब्दान्वितस्यैव काकाक्षिन्यायेनोभयत्रान्वये दोषाभावात् । 'मूलतः शाखां परिवास्योपवेषं करोति' इत्यत्र शाखां मूलतः परिवास्य मूलत उपवेषं करोतीति परिवासनान्वितस्यापि मूलत इत्यस्य उपवेषं करोतीत्यनेनापि अन्वयस्याङ्गीकृतत्वात् । जीवहृदयगुहावर्तित्वप्रतिपादनेऽपि जीवभेदसिद्धेश्च । न हि जीवस्यैव जीवगुहावर्तित्वप्रतिपादने प्रयोजनमस्ति ।

ननु 'न जायत'इत्युपन्यस्तस्यात्मनः जायमानवाचिजन्तुशब्देन परामर्शस्यानुपपन्नतया, अस्य जन्तोरित्यस्य प्रत्यक्षादिसन्निधापितदेहपरतया एव वक्तव्यत्वेन तद्गुहाहित आत्मा प्रागुपन्यस्तो जीव एवास्तु । न च कर्तृत्वभोक्तृत्वादिविशिष्टतया सदा अहमिति भासमाने जीवे, 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति,' 'क इत्था वेद यत्र सः' इति उत्तरसन्दर्भप्रतिपाद्यं दुर्विज्ञानत्वं कथमन्वेत्वि(ती)ति वाच्यम् । जीवस्य कर्तृत्वादिविशिष्टतया सर्वलोकविदितत्वेऽपि मुक्तप्राप्य[3]ब्रह्मरूपविशिष्टतया दुर्विज्ञानत्वसंभवादिति चेन्न— 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इति जन्तुशब्दस्य चेतनपर्यायतया प्रकृतजीववाचित्वसंभवात् । अस्येति शब्दस्य च पूर्वसन्दर्भोपस्थापितप्रत्यगात्मविषयत्वसंभवे प्रत्यक्षाद्युपस्थापितदेहविषयत्वाश्रयणस्यायुक्तत्वात् । अत्यन्ताणुत्वमहत्त्वयोः, 'एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा, एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' इत्यादिषु परमात्मधर्मतया सिद्धत्वेन[4] अणोरणीयानिति मन्त्रप्रतिपाद्यस्य जीवत्वशङ्काया असंभवात् ।

---

२०. तैत्तिरीये (10) श्वेताश्वतरे (3) चायं मन्त्रः पठ्यते । उत्तरार्धे भेदः तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमिति । अत्रापीदं पाठान्तरमिव भाष्ये निर्दिष्टम् ।

---

1, चेतनस्येति नास्ति ग, 2, अन्वितस्य ग, 3, ब्रह्मस्वरूप ग, 4, सिद्धत्वेनेत्यधिकं ख,घ.

**तमक्रतुः पश्यति वीतशोको धातु[1]प्रसादान्महिमानमात्मनः ॥ २० ॥**

**आसीनो दूरं व्रजति शयानो याति सर्वतः ।**
**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥**

ननु 'नेतरोऽनुपपत्तेः' इति सूत्रे 'सह ब्रह्मणा विपश्चिता' इति वाक्यश्रुतविपश्चित्त्वस्य ब्रह्मासाधारणलिङ्गत्वस्य भाष्ये प्रतिपादितत्वात् तद्बलात् 'न जायते म्रियते वा विपश्चित्' इति मन्त्रस्यापि पररीत्या परमात्मपरत्वमेवास्तु । एवं सति 'अन्यत्र धर्मा' दिति प्रश्नस्य प्राप्यद्वयपरत्वं प्रतिवचनस्य प्राप्यद्वयपरत्वमाश्रित्य, 'न जायत' इत्यादिमन्त्रद्वयस्य प्राप्यजीवस्वरूपपरत्वम्, अणोरणीयानिति सन्दर्भस्य च परमात्मपरत्वमित्यादिपरिकल्पनक्लेशो नाऽऽश्रयणीय इति चेत्—न। हननादिप्रतिषेधाद्यनुपपत्त्या विपश्चिच्छब्दे मुख्यार्थत्यागस्यावश्यकत्वेन तन्मन्त्रद्वयस्य अणोरणीयानित्यादिमन्त्रसन्दर्भस्य च एकविषयत्वासंभवात् । शिष्टमुत्तरत्र स्पष्टयिष्यते ।

**तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः । तम्** तादृशं परमात्मानम् **अक्रतुः** काम्य(म) कर्मादिरहितस्सन् **धातोः** धारकस्य परमात्मनः **प्रसादात् आत्मनः महिमानं** महत्त्वसंपादकं स्वसार्वज्ञ्यादिगुणाविर्भावहेतुभूतं परमात्मानं यदा पश्यति, तदा वीतशोको भवतीत्यर्थः । (यद्वा।) द्युभ्वाद्यधिकरणे 'जुष्टं यदा पश्यत्यन्यमीशम्' इति मन्त्रखण्डं प्रस्तुत्य 'अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणम्, अस्येश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति, तदा वीतशोको भवती'ति भगवता भाष्यकृता व्याख्यातत्वात् तदनुसारेणेहा[2]पि परमात्मनः निखिलजगन्नियमनरूपं महिमानं च यः पश्यति, स वीतशोको भवतीत्यर्थः । धातुप्रसादाद्वीतशोको भवतीति वान्वयः । 'प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः' इति स्मृतेरिति द्रष्टव्यम् । 'अक्रतुं पश्यति—धातुः प्रसादान्महिमानमीशम्' इति पाठे **अक्रतुं**—कर्मकृतोत्कर्षापकर्षशून्यमित्यर्थः । **धातुः**—भगवतः ॥ २० ॥

धातुप्रसादशब्दितभगवदनुग्रहशून्यस्य परमात्मतत्त्वमत्यन्तालौकिकत्वाद्दुरधिगममिति दर्शयति —**आसीनो दूरं व्रजति शयानो याति सर्वतः ।** परमात्मनः[3] सर्वात्मग(क)त्वेन इतरत्र विरुद्धतया प्रतीयमाना अप्यासीनत्वदूरगन्तृत्वादिधर्मा जीवद्वारा तत्र सन्तीति भावः । **कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ।** हर्षाहर्षविरुद्धधर्ममध्यस्थं[4] त परमात्मप्रसादानुगृहीतमादृशजनादन्यः को वा ज्ञातेत्यर्थः ॥ २१ ॥

२१. "तद्धावतोऽन्यानत्येति तिष्ठ"दितीशावास्यवाक्य इव चात्रार्थो वक्तुं शक्यते । मदन्य इत्यस्य मदनार्हः मदनकदनकुशल इत्यप्यर्थो भवेत् । त्वदन्यः को मर्त्यः मत् मत्तः ज्ञातुमर्हतीत्यर्थे तु मत् अन्य इति पदच्छेदः आवश्यकः ॥ भाष्ये ज्ञातेति लुडन्तम् । यद्वा तृजन्तम् । अतः तमिति द्वितीयोपपत्तिः । को वा ज्ञातुमर्हति, न कश्चित् तत्त्वतो ज्ञातेत्यर्थः इत्येतावद्वाक्यं स्थितं स्याद्वा ?

1. धातुः मा०, 2. तदनुसारेणापि ग. घ. 3. परमात्मन इति न ग. 4. धर्मोपस्थं ख. घ.

अशरीरँ शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥ २३ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥

**अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्** । कर्मकृतशरीररहितम्, **अनवस्थेषु**—अस्थिरेषु, शरीरेषु[1] नित्यत्वेन तत्र(?) स्थितम् । **महान्तं विभुमात्मानं मत्वा धीरो न शोचति** । **महान्तं विभुं**[2]—महावैभवशालिनम् । शिष्टं स्पष्टम् ॥ २२ ॥

ईदृशात्मप्राप्त्युपायं दर्शयति—**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन** । अत्र [3]प्रवचनशब्देन प्रवचनसाधनं मननं लक्ष्यते । उत्तरत्र, 'न मेधया न बहुना श्रुतेने'ति वक्ष्यमाणध्यानश्रवणसमभिव्याहारबलेन प्रवचनशब्देन मननस्यैव ग्रहीतुमुचितत्वात्; अध्यापनरूपस्य प्रवचनस्य हेतुत्वाप्रसक्तेश्च; तथैव व्यासार्यैर्विवृतत्वाच्च [प्रवचनं मननम्] । **यमेवैष वृणुते तेन लभ्यः** । **एषः** परमात्मा यं साधकं प्रार्थयते, **तेन लभ्यः** प्रार्थनीयपुंसा लभ्य इत्यर्थः । तत्प्रार्थनीयत्वं च तत्प्रियतमस्यैव पुंसः । तत्प्रियतमत्वं च तत्प्रीतिमत एव । ततश्च भगवद्विषयिणी उपासकस्य प्रीतिः भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवतीत्यर्थः । **तस्यैष आत्मा विवृणुते तनूं स्वाम्**— **तस्य** उपासकस्य **एष आत्मा** परमात्मा स्वरूपं प्रकाशयति, स्वात्मानं प्रयच्छतीत्यर्थः । **वृणुते** इति पाठेऽपि स एवार्थः ॥ २३ ॥

परमात्मप्राप्तिहेतुभूतोपासनाङ्गतया कांश्चिद्धर्मानुपदिशति—**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्** । परदारपरद्रव्यापहारादनिवृत्तः अनुपशान्तकामक्रोधवेगः नानाविधव्यापारविक्षिप्ततयाऽनवहितचित्तः अनिगृहीतमनाश्च **एनं**—परमात्मानं प्रज्ञानेन नाप्नुयादित्यर्थः । पुरुषार्थस्यैवानृतवदननिषेधस्य

२३. मन्त्रोऽयं मुण्डकेऽपि (६) । लभ्य इत्यन्तेन भक्तिरूपापन्नस्योपायत्वमुच्यते । एतन्मन्त्रार्थो न केवलं श्रीभाष्यम्, किन्तु गीताभाष्य (८·१४) मप्यनुसृत्य निष्कर्षणीयः । यद्यपि श्रुतादीनामचेतनानां चेतनमीश्वरमन्तरा फलहेतुत्वं नास्तीत्येतन्मन्त्रार्थः स्यात् । अथापि वरणे सत्येव लभ्य इति तत्रैवकारं विना यमेवेति अधिकारिवाचकपदोपरि एवकारसत्त्वात् यमधिकारिणमेव वृणुत इति क्वचिदधिकारिणि अन्यव्यावृत्तविशेषसूचनैदम्पर्यं मन्त्रस्येत्यधिकारिगतभक्तिगुणपरतया योजितम् । पराधिकरणे भाषितमनन्योपायत्वं श्रुतप्रकाशिकायां विवृतम्, 'तस्यैष इति चतुर्थ्यन्तेन प्रापकत्वं प्राप्यत्वं चैकस्यैवेति गम्यत' इति । अनन्योपायत्वं हि अनन्यं प्रत्युपायत्वम्, स्वं प्रत्येव स्वस्योपायत्वमिति । अन्योपायरहितत्वमित्यर्थे तु अत्रोपायत्वं फलप्रदानसंकल्पाश्रयत्वरूपं चेतननिष्ठं वक्तव्यम् ।

1. शरीरेष्विति न ग. 2. महान्तं प्रसिद्धवैभवशालिनं विभुं सर्वव्यापिनम् । [अत्र]शिष्टमिति ख. घ. 3. प्रवचनेत्यादि बलेनेत्यन्तं न ग.

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥
॥ इति द्वितीय वल्ली ॥

दर्शपूर्णमासप्रकरणे क्रत्वङ्गतया, 'नानृतं वदेत्' इति निषेधवत् पुरुषार्थस्यापि दुश्चरित-विरत्यादेरुपासनाङ्गतया विधानमुपपद्यते । ततश्च, यस्तु पुरुषार्थमपि दुश्चरितनिषेधमतिलङ्घ्य परमात्मोपासनमविगुणं चिकीर्षति, तस्य दुश्चरितनिषेधरूपाङ्गवैगुण्यादुपासनमाद्गुण्यं न सिद्ध्यतीति भावः[1] ॥ २४ ॥

**यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः । ब्रह्म च क्षत्रं च**— ब्रह्मक्षत्रास्यवर्णद्वयोपलक्षितकृत्स्नचराचरात्मकमिदं जगत् । **यस्य ओदनो भवति**—यस्य विनाश्यो भवतीत्यर्थः । **यस्य मृत्युः** स्वयमद्यमानत्वे सति अन्यस्यादनहेतुर्भवति, **सः**— निखिलचराचरसंहर्ता परमात्मा **यत्र**— यस्मिन् प्रकारे स्थितः यत्प्रकारविशिष्टः, तं प्रकारमित्थमिति को वेदेत्यर्थः ।

ननु ब्रह्मक्षत्रपदेन कृत्स्नचराचरग्रहणे किं बीजमिति चेदुच्यते— ब्रह्म च क्षत्रं च ओदन इत्युक्ते ब्राह्मणक्षत्रियवर्णयोः किंचित् प्रति ओदनशब्दमुख्यार्थत्वासंभवात्[2] ओदन-शब्देन भोज्यत्वं[3] वा भोग्यत्वं वा विनाश्यत्वं वा लक्षणीयम् । न हि ब्रह्मक्षत्रमात्रभोक्ता तन्मात्रसंहर्ता वा कश्चिज्जीवो वा परमात्मा वाऽस्ति । [4]न च अन्तरादित्यविद्यायां 'ये चामुष्मा त्पराञ्चो लोकास्तेषाञ्चेष्ट' इति सर्वलोकेश्वरे परमात्मनि उपासनार्थं लोकविशेषेशितृत्वश्रव-णवत् सर्वसंहर्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहरणमुपासनार्थमुपदिश्यतामिति वाच्यम् । तद्वदस्यो-पासनाप्रकरणत्वाभा[5]वात् । अतः ब्रह्मक्षत्रग्रहणस्य चराचरमात्रोपलक्षणत्वं युक्तम् । उक्तं च सूत्रकृता, 'अत्ता चराचरग्रहणात्' इति ।

नन्वेवमपि ओदनशब्देन किमिति विनाश्यत्वं लक्ष्यते । गौणत्वमपि शब्दस्य साधारण-गुणमपहाय असाधारणगुणेनैव निर्वाह्यम् । न हि अग्निर्माणवक इत्यत्र अग्निशब्देन पैङ्गल्यादेरिव द्रव्यत्वादेरुपस्थितिरस्ति । अत एव 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य' इत्यध्वर्युप्रैषे उद्गातृशब्दस्य बहुवचनानुरोधेन बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय विशेषा[6]कारेण उद्गातृगणमात्रलक्षणा पूर्वतन्त्रे वर्णिता । तद्वदिहापि [7]ब्रह्मक्षत्रयोरोदन शब्दमुख्यार्थत्वासंभवेपि भोज्यत्वभोग्यत्वरूपान्तरङ्गाकारस्यैव लक्षणयाऽपि ग्रहणं युक्तम् । न त्वत्यन्तबहिरङ्गस्य विनाश्यत्वाकारस्य, येन निखिलचराचरसंहर्ता परमात्माऽत्र वाक्ये प्रती-

२५. प्रकारस्य धर्मिणा सहैव ज्ञेयत्वात् एतदित्यनुक्त्वा इत्थमित्युक्तम् ॥ इत्था, अद्धा इत्यादिकं सत्यपर्यायतया निरुक्ते पठ्यते ।

1. इत्यर्थः ग. 2. मुख्यार्थास घ. मुख्यार्थत्वासं ग. 3. भोज्यत्वंवेति न ग. 4 नच— वाच्यमित्यत्र, ननु—चेन्नेति ग. 5. प्रकरणत्वासंभवात् ग. घ. 6. विशेषाकारेणेति न ग. 7. अपिशब्दो न घ. । ब्रह्मक्षत्रेत्यनन्तरं अत्रेत्यन्तं ग. कोशे ग्रथ्यम् ।

॥ अथ तृतीयवल्ली ॥

**हरिः ओम्। ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे [1]परार्द्धे।**

येतेति चेत्—उच्यते। यद्यपि विनाश्यत्वं साधारणाकारः, तथापि, 'मृत्युर्यस्योपसेचन' मिति वाक्यशेषानुरोधात् साधारणोऽपि गौण्या वृत्त्या लक्षयितुमुचितः। ननु उपसेचनशब्दापेक्षया ओदनशब्दस्य मुख्यत्वात् ओदनशब्दस्वारस्यानुरोधेन असाधारणाकाररूपभोग्यत्वे लक्षिते जघन्यमुपसेचनपदमबाधकत्वाभिप्रायेण कथञ्चिन्नीयताम्। अतः(तश्च)ब्रह्मक्षत्रभोक्ता यः, यस्य च मृत्युरबाधकः, सोऽस्मिन्मन्त्रे प्रतिपाद्यः। भोक्तृत्वं च जीवस्यैवेति स एवास्मिन्मन्त्रे प्रतिपाद्यतामिति चेत्—उच्यते। उपसेचनत्वेन रूपितस्य मृत्योः ओदनत्वरूपितेन ब्रह्मक्षत्रशब्दितेन दध्यन्नवत् प्रतीतसम्बन्धस्य सर्वात्मना बाधप्रसङ्गात्। न हि यस्य ब्रह्म क्षत्रं च भोग्यम्, यस्य च मृत्युरबाधक इत्युक्ते मृत्योः ब्रह्मक्षत्रस्य च सम्बन्धः प्रतीयते। अतः उपसेचनशब्दस्य ओदनशब्दापेक्षया जघन्यत्वेऽपि अबाधकत्वरूपसाधारणगुणं विहाय स्वयमद्यमानत्वे सति अन्यादनहेतुत्वरूपासाधारणाकार[2] एव ग्राह्यः। ततश्च एकवाक्यान्तर्गतचरमश्रुतोपसेचनपदानुसारेण ओदनशब्देनापि विनाश्यत्वमेव लक्षणीयम्। स्वबुद्ध्युपस्थापनीयविशेषाकाररूपगुणग्रहणादपि एकवाक्यतापन्नपदान्तरोपस्थापितगुणग्रहणस्यैव बुद्धिलाघवेन एकवाक्यतासामर्थ्यानुरोधेन च न्याय्यत्वादित्यस्यार्थस्य अत्त्रधिकरणे निर्णीतत्वादित्यलं पल्लवितेन (पारिप्लवेन) ॥ २५ ॥

॥ इति द्वितीयवल्लीप्रकाशिका ॥

'क इत्था वेद यत्र सः' इति अस्य दुर्ज्ञानत्वे, अत्र इत्थमास्ते इति अस्यार्थस्य दुर्बोधत्वेन न वयं तदुपासने शक्ताः इति मन्यमानं प्रति उपास्योपासकयोरेकगुहानुप्रवेशेन परमात्मनस्सूपासत्वात्[3] वयमप्युपासितुं शक्ता इति द्वाभ्यां मन्त्राभ्यां दर्शयति—**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये।** सत्यव[4]दवश्यंभाविकर्मफलमनुभवन्तौ सुकृतसाध्ये **लोके** अस्मिन्नेव लोके वर्तमानौ हृदयकुहरं **प्रविष्टौ** तत्रापि **परमाकाशे परार्ध्ये**-परार्धं सङ्ख्याया उत्तरावधिः तदर्हतीति परार्ध्यम्, उत्कृष्ट(ष्टम्?) इत्यर्थः। तादृशे हार्दाकाशे वर्तमानौ। **छायातपौ ब्रह्मविदो वदन्ति।** छायातपशब्दाभ्यां

1. **परार्ध्ये।** परमुत्कृष्टमर्धं स्थानमर्हतीति परार्ध्यमुत्कृष्टमित्यपि वदन्ति। प्रश्नोपनिषदि च स्थानार्थकोऽर्धशब्दः प्रयुक्तः, 'दिवः परेऽर्धे पुरीषिणम्' (१-११) इति। अथापि परमाकाशस्योत्कृष्टस्थानार्हत्वापेक्षया परार्धसंख्यार्हत्वं सूपपादम्, तादृशसंख्यातत्वाद्यर्हत्वादिति इहेयमेव व्युत्पत्तिरादृता॥

1. परार्धे शाङ्करभाष्ये। 2. असाधारणरूप एव ग. 3. सूपास्यत्वात् ग. घ. 4. सत्यपद-वाच्यावश्यंभावि ग. घ.

**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥**

ज्ञाज्ञौ लक्ष्येते । अज्ञशब्देन जीवनिर्देशस्य चायमभिप्रायः—'उपास्योपासकयोरेकगुहावर्तित्वे तयोरेव प्राप्यप्राप्तृतया[1] वक्तव्यतया प्राप्यस्य च तत्प्राप्तिसाधनरथत्वेन रूपिते शरीरेऽवस्थानमयुक्तम् । न हि रथेन प्राप्तव्योऽर्थः रथस्थो भवतीति शङ्का न कार्या । प्राप्यस्य परमात्मनः तत्रावस्थितत्वेऽपि, जीवस्य, 'पराभिध्यानात्तु तिरोहितम्' इत्युक्तरीत्या परमात्मसङ्कल्पमूलकर्मरूपाविद्यावेष्टिततया तदनुभवलक्षणतत्प्राप्तेरभावेन प्राप्तृप्राप्ययोर्जीवपरयोः रथत्वरूपितशरीरान्तर्वर्त्येकगुहावर्तित्वकथने नानुपपत्तिः' इति । **पञ्चाग्नयो ये च त्रिणाचिकेताः—** पञ्चाग्निशुश्रूषापरिशुद्धान्तःकरणाः । **त्रिणाचिकेताः—**उक्तोऽर्थः । एवंभूता ब्रह्मविदो वदन्तीत्यर्थः । केवलपञ्चाग्नित्रिणाचिकेतानामीदृशपरमात्मप्रतिपादनासामर्थ्यात् ब्रह्मविदामेव पञ्चाग्नित्वत्रिणाचिकेतत्वे विशेषणे ।

अस्य मन्त्रस्य जीवपरमात्मपरत्वं सूत्रितम्—'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति । ननु कर्मफलभोगशून्ये परमात्मनि 'ऋतं पिबन्ता' विति निर्दिष्टकर्मफलभोक्तृत्वासंभवात्, सुकृतसाध्यलोकवर्तित्वगुहावच्छिन्नत्वयोस्सर्वगते परस्मिन् ब्रह्मण्यसंभवात्, छायातपनिर्दिष्टाप्रकाशत्वप्रकाशत्वयोरपि जीवपरमात्मपरत्वे असंभवात्, बुद्धिजीवपरत्वे तु तस्य सर्वस्याप्युपपत्तेः, कर्मफलभोगकरणे कर्तृत्वोपचारेण पिबन्ताविति निर्देशस्याप्युपपत्तेः बुद्धिजीवपरत्वमेवास्य मन्त्रस्य युज्यत इति चेत्—एवमेव हि 'गुहां प्रविष्टा' विति सूत्रे आशङ्क्य, 'संख्याश्रवणे सति एकस्मिन् संप्रतिपन्ने द्वितीयाकांक्षायां प्रतिपन्नजातिमुपजीव्य व्यक्तिविशेषपरिग्रहे बुद्धिलाघवात् विजातीयपरिग्रहे जातिव्यक्तिबुद्धिद्वयापेक्षया गौरवात् संप्रतिपन्नजातीयपरिग्रहो युक्तः। लोकेऽपि 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः' इत्यादौ तथा दर्शनात् । तथाच ऋतपानलिङ्गावगतस्य जीवस्य द्वितीयः चेतनत्वेन तत्सजातीयः परमात्मैव ग्राह्यः; परमात्मनः प्रयोजककर्तृतया पिबन्ताविति निर्देशस्यापि संभवात्, अन्तःकरणे स्वतन्त्रकर्तृत्व-प्रयोजककर्तृत्वयोरभावेन पिबन्ताविति निर्देशस्य सर्वथाऽप्यसंभवात्, सर्वगते ब्रह्मणि सुकृतसाध्यलोकवर्तित्वस्यापि संभवात्, अस्मिन्नेव प्रकरणे 'गुहाहितं गह्वरेष्ठम्' इति परमात्मनो गुहाप्रवेशश्रवणेन गुहाप्रविष्टावित्य[2]स्याप्युपपत्तेः,छायातपशब्दाभ्यां किञ्चिद्ज्ञसर्वज्ञयोः प्रतिपादनसंभवात् जीवपरमात्मपर एवायं मन्त्र इति समर्थितत्वात् न त्वदुक्तशङ्कावकाशः ।

" 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्' इति पैङ्गिरहस्यब्राह्मणानुसारेण 'द्वा सुपर्णे' ति मन्त्रस्य बुद्धिजीवपरत्वात्, 'इयदामननात्' इत्यधिकरणे, ऋतं पिबन्ताविति मन्त्रस्य 'द्वा सुपर्णे' ति मन्त्रैकार्थ्यस्य प्रतिपादितत्वात् अयमपि मन्त्रः बुद्धिजीवपरः" इत्यस्याशङ्कायाः 'गुहां प्रविष्टावात्मानौ' इति सूत्रकृतैव निराकृतत्वा[3]न्नास्माभिस्सन्नह्यते ।

1. प्राप्यप्राप्तृतया ग. वक्तव्यतयेति नास्ति । 2. गुहाप्रवेशस्यापि ग. 3. नेत्यादिकं नास्ति ग. कोशे

यस्सेतुरीजानानामक्षरं ब्रह्म य[1]त्परम् ।
अभयं तितीर्षतां पारं नाचिकेतँ शके[2]महि(सि) ॥ २ ॥
आत्मानं रथिनं विद्धि शरीरँ रथमेव[3]च(तु) ।

किञ्च जीवे गुहाप्रवेशस्य बुद्ध्युपाधिकतया स्वतःप्रवेशवत्या बुद्ध्या सह जीवस्य 'गुहा प्रविष्टा'विति गुहाप्रवेशवर्णनं न सङ्गच्छते। उपष्टम्भकाधीनगुरुत्वशालिनि सुवर्णे गुरु सुवर्णमिति व्यवहारसम्भवेऽप्युपष्टम्भकसुवर्णे गुरुणी इति व्यवहारस्यादर्शनात् । अत एव परपक्षे सूत्रानुसारेण अस्य मन्त्रस्य जीवपरमात्मपरतया कृतं योजनान्तरमप्यनुपपन्नम् । 'अनेन जीवेनात्मनाऽनुप्रविश्य' इति श्रुत्यनुसारेण परमात्मनो जीवभावेनानुप्रवेशेऽपि परमात्मरूपेणानुप्रवेशाभावात् जीवपरमात्मानौ गुहां प्रविष्टाविति निर्देशानुपपत्तेः । जीवभावेन ब्रह्मणस्संसारमभिप्रेत्य, ब्रह्म संसरतीति व्यवहारसत्त्वेऽपि, 'जीवब्रह्मणी संसरत' इति व्यवहारासंभवात् । 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति । कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' (नृ.ता९..) इति वचनानुसारेण[4]परिगृहीते अविद्याया वा अन्तःकरणस्य वा जीवोपाधित्वमिति पक्षद्वयेऽपि नाविद्यान्तःकरणयोः प्रतिविम्बोपाधित्वं युज्यते। स्वच्छद्रव्यप्रतिहतिपरावृत्तनायनरश्मिगृह्यमाणस्यैव प्रतिबिम्बशब्दार्थतया अचाक्षुषस्य चैतन्यस्य प्रतिबिम्बत्वासंभवेन अविद्याप्रतिबिम्बोऽन्तःकरणप्रतिबिम्बो वा जीव इत्याश्रयणायोगात् । अतोऽविद्यावच्छिन्नः अन्तःकरणावच्छिन्नो वा जीव इति पक्षद्वयमेव परिशिष्यते । तत्र च हृदयगुहायामविद्यान्तःकरणाभ्यामवच्छिन्नत्वेन अनवच्छिन्नपरमात्मनो गुहाप्रवेशवर्णनश्रुतेर्वा अन्तर्यामिब्राह्मणस्य वा नाञ्जस्यमित्यलमतिचर्चया । प्रकृतमनुसरामः ॥ १ ॥

**यस्सेतुरीजानानाम्** । [5]यज्वनां यः **सेतुः**— आधारभूतः कर्मफलप्रद इत्यर्थः । ईजानानामिति कानजन्तः शब्दः । **अक्षरं ब्रह्म यत् परम्**—यन्निर्विकारं परं ब्रह्म । **अभयं तितीर्षतां पारम्** संसारसागरं तितीर्षतां निर्भयं दृढं तीरम् । **नाचिकेतं शकेमहि**— नाचिकेताग्निप्राप्यमुपासितुं शक्ताः स्म इत्यर्थः । शकेर्व्यत्ययेन शप् । [6]नाचिकेतं शकेमहीत्यस्य मन्त्रखण्डस्य तथैव भाष्यकृता व्याख्यातत्वात् । अतः दुरुपासत्वबुद्ध्या न भेतव्यमिति भावः ॥ २ ॥

'आत्मानं रथिनं विद्धी'त्यादिना 'सोऽध्वनः पारमाप्नोति' इत्यन्तेन संसाराध्वपारभूतवैष्णवपरमपदप्राप्तौ परिकरमुपदिशन् प्राप्तृ[7]रूपमुपदिशति— **आत्मानं रथिनं विद्धि** । शरीराधिष्ठातारं रथिनं विद्धि । **शरीरं रथमेव च** । [8]शरीरमेव च रथं विद्धीत्यर्थः ।

1. तत्परम् माध्व । 2. शकेमसि माध्व । 3. तु शाङ्क. च माध्व 4. प्रतिगृहीते **ग.** 5 यज्वनामिति नास्ति **ग.** 6 नाचिकेतं शकेमहीति' इत्येतत्स्थाने, 'इदन्तोमसि (पा. ७-४६) नाचिकेतं शकेमसीति' इति **ख.** । विषयवाक्यदीपिकायामेप्येवं पाठो दृश्यते. 7. स्वरूपं **ग. घ.** 8. एतत्स्थाने, 'स्पष्टोऽर्थः' **ख. घ.**

तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा(ह) ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥

यस्तु विज्ञानवान् भवति युक्तेन मनसा [1]सह(दा) ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः ।
न स तत् पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥

यस्तु विज्ञानवान् भवति समनस्कस्सदा शुचिः ।
स तु तत् पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥

**बुद्धिं तु सारथिं विद्धि ।** बुद्धिशब्देनाध्यवसायार्थत्वात्तत्प्रवृत्तेः तस्यास्सारथित्वमिति भावः । **मनः प्रग्रहमेव च ।** प्रग्रहः– रशना ॥ ३ ॥

**इन्द्रियाणि हयानाहुः**—स्पष्टोऽर्थः । **विषयांस्तेषु गोचरान्**– तेषु इन्द्रियेषु हयत्वेन रूपितेषु **गोचरान्** मार्गान् शब्दादिविषयान् [illegible]र्थः । रथसारथिहयप्रग्रहत्वेन रूपितानां[2]शरीरेन्द्रियमनोबुद्धीनामभावे रथित्वेन रूपितस्यात्मनः स्वतो गमनरूपलौकिक-वैदिकक्रियाकर्तृत्वमेव नास्तीत्येतत् सुप्रसिद्धत्वेन दर्शयति **आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।** आत्मशब्दो देहपरः । मनश्शब्दस्तत्कार्यबुद्धेरप्युपलक्षकः । पूर्वमन्त्रे बुद्धेरपि सारथित्वेन निर्दिष्टत्वात् । भोक्ता कर्तृत्वभोक्तृत्वादिमानित्यर्थः । न हि केवलस्यात्मनः कर्तृत्वं भोक्तृत्वं वाऽस्तीति भावः ॥ ४ ॥

शरीरादेः रथत्वादिरूपणस्य प्रयोजनमाह—(यस्त्वविज्ञानवानित्यादिना मन्त्रद्वयेन ।) **यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सह(दा) । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ यस्तु विज्ञानवान् भवति युक्तेन मनसा सह(दा) । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥** लोके हि समीचीनसारथिप्रग्रहवन्तः अश्वा वशीकृता भवन्ति । एवं सारथिप्रग्रहत्वेन रूपितयोर्विज्ञानमनसोस्समीचीनत्वे अश्वत्वेन रूपितानि इन्द्रियाणि वश्यानि भवन्ति ; नान्यथेत्यर्थः ॥ ५+६ ॥

हयत्वेन रूपितानामिन्द्रियाणां वशीकरणतदभावयोः प्रयोजनं दर्शयति मन्त्रद्वयेन—**यस्त्वविज्ञानवान्भवत्यमनस्कस्सदाऽशुचिः । न स तत् पदमाप्नोति संसारं चाधिगच्छति ॥ यस्तु विज्ञानवान्भवति समनस्कस्सदा शुचिः । स तु तत् पदमाप्नोति यस्माद्भूयो न जायते ॥ अमनस्कः**—अनिगृहीतमनाः । अत एव**आशुचिः** सर्वदा विपरीत-

1. सदा शाङ्कर माध्व । 2. कृतवान् ग.

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥**
**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥**
**महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।**
**पुरुषान्न परं किञ्चिन् सा काष्ठा सा परा गतिः ॥ ११ ॥**

चिन्ताप्रवणत्वादित्यर्थः । न केवलं जिगमिषितप्राप्त्यभावमात्रम्, प्रत्युत गहनं संसारकान्तारमेव प्राप्स्यती (प्राप्नोती?) त्यर्थः ॥ ७ ॥ ८ ॥

किं तत् पदमित्याकांक्षायां तत् पदं दर्शयन्नुपसंहरति—**विज्ञानसारथिर्यस्तु मनः-प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्** । समीचीनविज्ञानमनश्शाली संसाराध्वपारभूतं परमात्मस्वरूपं प्राप्नोतीत्यर्थः ॥ ९ ॥

वशीकार्यत्वाय रथादिरूपितेषु शरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते —**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धे-रात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः** ॥ अस्य मन्त्रद्वयस्यार्थो भगवता भाष्यकृता आनुमानिकाधिकरणे उक्तः । इत्थं हि तत्र भाष्यकृता[1]—"तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि तान्युच्यन्ते, 'इन्द्रियेभ्यः पराः' इत्यादिना । तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वे पराः । वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योऽपि परं प्रग्रहरूपितं मनः । मनसि विषयप्रवणे विषयासन्निधानस्याप्य-किंचित्करत्वात् । तस्मादपि सारथिरूपिता बुद्धिः परा । [2]अध्यवसायाभावे मनसोऽप्यकिं-चित्करत्वात् । तस्या अपि रथित्वेन रूपित आत्मा कर्तृत्वेन प्राधान्यात् परः । सर्वस्यात्मेच्छा-यत्तत्वात् आत्मैव महानिति च विशेष्यते । तस्मादपि रथरूपितं शरीरं परम् । तदायत्तत्वा-ज्जीवस्य सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्यामी अध्वनः पारभूतः परमपुरुषः । यथोक्तस्य आत्मपर्यन्तस्य तत्संकल्पायत्तप्रवृत्तित्वात् । स खल्वन्त-र्यामितया उपासनस्यापि निर्वर्तकः । 'परात्तु तच्छ्रुतेः' इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासनसिद्ध्युपायकाष्ठाभूतः परमप्राप्यश्च स एव । तदिदमुच्यते 'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' इति । तथा अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्' इत्यादिभिः सर्वं साक्षात्कुर्वन् सर्वं नियमयती युक्त्वा 'नान्योऽतोऽस्ति द्रष्टा' इति नियन्त्रन्तरं निषिध्यते । भगवद्गीतासु च 'अधिष्ठानं तथा कर्ता करणं च

1. भाष्यकृतेत्येतस्थाने भाष्यमित्येव पठन्ति भाष्यमित्येव नियमेन ग. उपरितनदिशाठे, इत्थं हि भाष्यकृता भाषितमिति योजना स्यात् । एतत्तु प्रत्याय । 2. एवं हेतोरनुभाषणमुपनिषद्भाष्यकोशेषु नास्ति ।

**एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥**
**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि ।**

पृथग्विधम् । विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्' इति । दैवमत्र पुरुषोत्तम एव । 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' इति वचनात् । तस्य च वशीकरणं तच्छरणागतिरेव । यथाऽऽह, 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छ' इति । तदेवम् 'आत्मानं रथिनं विद्धि' त्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः, 'इन्द्रियेभ्यः परा ह्यर्था' इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यते" इति भाषितम् ॥ १०+११ ॥

**एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।** सर्वेषु भूतेषु आत्मतया वर्तमानोऽसौ गुणत्रय(मय)मायातिरोहितत्वेन अजितबाह्याभ्यन्तरकरणानां न यथावत् प्रकाशते । **दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः** । **अग्र्यया** - ऐकाग्र्ययुक्तया बाह्याभ्यन्तरव्यापाररहितया सूक्ष्मार्थविवेचनशक्तया सूक्ष्मदर्शनशीलैर्दृश्यत इत्यर्थः ॥ १२ ॥

बाह्याभ्यन्तरकरणव्यापाररोधप्रकारम् 'अध्यात्मयोगाधिगमेन' इति निर्दिष्टजीवस्वरूपज्ञानप्रकारञ्च[1] दर्शयति—**यच्छेद्वाङ्मनसी**त्यादिना । इमं मन्त्रं प्रकृत्यैवं हि (?) भाष्यकृता. "हयादिरूपितानामिन्द्रियादीनां वशीकरणप्रकारोऽयमुच्यते । **यच्छेद्वाङ्मनसी** वाचं मनसि नियच्छेत् । वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च[2] मनसि नियच्छेदित्यर्थः । वाक्छब्दे द्वितीयायाः, 'सुपां सुलुक्' इत्यादिना लुक् । मनसी इति सप्तम्याश्छान्दसो दीर्घः । **तद्यच्छेत् ज्ञान आत्मनि** —तत् मनः बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । **ज्ञान आत्मनीति** व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः । **ज्ञानमात्मनि महति नियच्छेत्**—बुद्धिं कर्तरि महति आत्मनि नियच्छेत् । **तद्यच्छेच्छान्त आत्मनि**— तं कर्तारं परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः" इति भाषितम् । विवृतञ्च श्रुतप्रकाशिकायाम् -'वाचो मनसि नियमनं मनोननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसः बुद्धौ नियमनम् अध्य(व्य)वसायानुगुणप्रवृत्तिापादनम् । बुद्धिश्चार्थेषु हेयत्वाध्य(वव्य)वसायरूपा । तस्याः बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनम् । **शान्ते**—स्वतः ऊर्मिषट्कप्रतिभटे । शान्त आत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिः' इति । आत्मशब्दस्य पुलिङ्गत्वात् पुलिङ्गतच्छब्देन निर्देष्टव्ये छान्दसत्वाल्लिङ्गव्यत्ययः[3] ।

1. बाह्यान्तःकरणानां ग. घ. 2. चकारोऽयं ग. कोशे । 3. 'व्यत्यय इति 'इतिशब्दोऽधिकः ग.

**ज्ञानमात्मनि महति [1]नियच्छेत् तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥**
**उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।**
**क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति ॥ १४ ॥**
**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**

ननु भाष्ये, 'ज्ञान आत्मनीति व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः' इत्युक्तिरयुक्ता; अव्यावर्तकत्वादात्मनि वर्तमान इति विशेषणस्य । आत्मन्यवर्तमानज्ञानस्यैवाभावात् । न च 'तद्यच्छेत ज्ञाने' इत्येतावत्युक्ते आत्म[2]रूपज्ञानभ्रान्तिस्स्यात् । अतः ज्ञान आत्मनीत्युक्तमिति--वक्तुं शक्यम् । तथा सति तस्या एव भ्रान्तेः सामानाधिकरण्ययोजनया दृढीकरणप्रसङ्गात् । न हि आत्मनीत्यनेन आत्मभ्रान्तिर्व्युदस्यते । न च--आत्मनि वर्तमान इति भाष्यस्य आत्मनि विषयविषयिभावलक्षणसम्बन्धेन वर्तमान इत्यर्थः । आत्मविषयज्ञान इति यावत् । अतो व्यावर्तकतया न वैयर्थ्यदोष इति--वाच्यम् । तथा सति 'ज्ञानमात्मनि महति नियच्छेत्' इत्यस्य वैयर्थ्यापातात् । तदर्थस्य [3]अनेनैव सिद्धेरिति चेत्-- उच्यते । अयमभिप्रायो भाष्यकारस्य- 'तद्यच्छेत् ज्ञान आत्मनी'त्यत्र आत्मनीति विषयसप्तमी । तच्चात्मविषयकज्ञानम्, 'आत्मा उपादेयः तदतिरिक्ता अर्था हेया' इत्येवंरूपम् । तच्च 'अर्थेषु हेयताध्यवसायरूपा बुद्धि'रिति श्रुतप्रकाशिकायां व्यक्तम् । अस्य चात्मानात्मविषयकहेयहेयताध्यवसायरूपस्य ज्ञानस्य महत्यात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थविषयत्वापादनमिति तत्रैव श्रुतप्रकाशिकायामुक्तत्वात् वाक्यद्वयस्यापि सप्रयोजनतया त्वदुक्तवैयर्थ्यशङ्कानवकाश इति ॥ १३ ॥

एवं वशीकरणप्रकारमुपदिश्य अधिकारिपुरुषान् अभिमुखीकरोति -- **उत्तिष्ठत जाग्रत** । आत्मज्ञानाभिमुखा भवत; अज्ञाननिद्रायाः क्षयं कुरुत । **प्राप्य वरान्निबोधत** । **वरान्**- श्रेष्ठान् आचार्यान् उप[4]गम्याऽऽत्मतत्त्वं निबोधत । यद्वा उपासिताद्भगवतो वा ब्रह्मविद्भ्यो वा, 'देवतापारमार्थ्यं च यथावद्वेत्स्यते भवान्' इत्येवंरूपान् वरान् प्राप्य ज्ञेयमात्मतत्त्वं निबोधत । नोदासितव्यमिति भावः । **क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत् कवयो वदन्ति** । ज्ञानिनः **तत्** आत्मतत्त्वं दुर्गमं पंथानं वर्णयन्ति । तत् कस्य हेतोः? यतः आमतत्त्वं, **क्षुरस्य**--आयुधविशेषस्य, **धारा**--अग्रम्, **निशिता**--तीक्ष्णा, **दुरत्यया**--अनतिक्रमणीया । तीक्ष्णे क्षुराग्रे सञ्चरतः पुंसो यथा कियत्यप्यनवधाने आत्मनाशो भवति, एवमिहाऽऽत्मस्वरूपावगतिदशायां स्वल्पेऽप्यनवधानापराधे आत्मनाशो भवतीति भावः ॥ १४ ॥

उपसंहरति--**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्** । अत्र **नित्य**मित्येतत् अशब्दमित्यादौ प्रत्येकमभिसम्बध्यते । अशब्दत्वादिवशादेव कालवत्

1. भाष्ये नियच्छेदिति नास्ति । 2. स्वरूप ग. 3. तदर्थस्यापि तेनैव घ, 4. उपसंगम्य ग. घ.

**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ १५ ॥**

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥**

**य इदं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।**
**प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥**

**॥ इति तृतीयवल्ली ॥ इति प्रथमोऽध्यायः ॥**

**अव्ययम् ।** [1]अवयवापचयशून्यमित्यर्थः । **अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते । महत** इत्यनेन 'आत्मनि महति नियच्छे' दिति पूर्वमन्त्रनिर्दिष्टो जीवो गृह्यते । **ध्रुवं**—स्थिरम् । **निचाय्य**— दृष्ट्वा, दर्शनसमानाकारोपासनेन विषयीकृत्येत्यर्थः । **मृत्युमुखादिति ।** भीषणात् संसारादित्यर्थः ॥ १५ ॥

[2]उपसंहरति—**नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम् ।** नचिकेतसा प्राप्तं **नाचिकेतम् । मृत्युप्रोक्तं**—मृत्योः प्रवक्तृत्वमेव, न स्वतन्त्रवक्तृत्वम् । अतः **सनातनम्** अपौरुषेयत्वात् प्रवाहरूपेण नित्यमित्यर्थः । **उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ।** स्पष्टोऽर्थः ॥ १६ ॥

**य इदं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि । ब्रह्मसंसदि**—ब्राह्मणसमाजे । **प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पते ॥ प्रयतः** शुद्धः ॥ १७ ॥

॥ इति तृतीयवल्लीप्रकाशिका समाप्ता ॥

॥ इति कठोपनिषदि प्रथमाध्यायभाष्यम् ॥

१५. उपरि फलश्रुतिप्रवृत्त्याऽत्रोपसंहारं दर्शयति—**उपसंहरतीति** । तथा च प्रकृतप्रथमाध्यायार्थसंग्रहपरे श्रीभाष्ये (१–४–७), "अशब्दमस्पर्शमित्यादिनोपसंहृत"मिति ।

१६. नाचिकेतकथाया अत्र निरूपणादयमुपाख्यानाध्यायः । **मृत्युप्रोक्त**मिति मृत्युप्रोक्ताग्न्यादिविषयकमित्यर्थः । न हि नाचिकेतकथा मृत्युप्रोक्ता । यद्वा मृत्युर्नाचिकेतमेऽर्थमुपदिश्य, अस्मत्संवादोऽयमनादौ वेदेऽप्यस्तीत्यभ्याप्य ज्ञापितवानिति । तद्दर्शितं **सनातन**मिति फलश्रुतिरियं प्रकृताध्यायमात्रस्य ॥

1. अवयवाप्ययशून्यम् ख. अवयवापचयशून्यम् घ. 2. उपसंहरतीति नास्ति घ.

## ॥ अथ द्वितीयोऽध्यायः ॥

हरिः ओम् । पराञ्चि खानि व्यतृण[1]त्स्वयंभूस्तस्मात्पराङ्पश्यन्ति[2] नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

' उत्तिष्ठत जाग्रत ' इति प्रोत्साहनेऽप्यात्मस्वरूपविमुखान् पश्यन् शोचति—**पराञ्चि खानि व्यतृणत् स्वयंभूः । खानि** इन्द्रियाणि । **पराञ्चि**—परानञ्चन्तीति पराञ्चि, परप्रकाशकानि, न त्वात्मप्रकाशकानि । तत्र हेतुं वदन् शोचति— **व्यतृणत् स्वयंभूः**— स्वतन्त्र ईश्वरः इमानि खानि हिंसितवान् । 'तृद्[3] हिंसायां' मिति धातुः । यद्वा धातूनामनेकार्थत्वात् परार्थ (परार्थ?) प्रकाशकानि इन्द्रियाणि सृष्टवानित्यर्थः । **तस्मात्पराङ्पश्यन्ति नान्तरात्मन्**— **पराङ्**-पराच इति यावत् । पराग्रूपान् अनात्मभूतान् **पश्यन्ति** उपलभन्ते, अन्तरात्मानं नेत्यर्थः । यद्वा—**पराङ्** पराङ्मुखानि भूत्वा विषयानेव पश्यन्तीत्यर्थः । **पराङ्पश्यती**ति पाठे लोकाभिप्रायमेकवचनम् । ईदृशेऽपि लोकस्वभावे नद्याः प्रतिस्रोतःप्रवृत्त इव कश्चित् पुरुषधौरेयः प्रत्यगात्मप्रवणोऽप्यस्तीत्याह— **कश्चिद्धीरः प्रत्यगात्मानमैक्षत्** । प्रत्यञ्चमात्मानं पश्यतीत्यर्थः । छान्दसं परस्मैपदम् । अत एव वर्तमानार्थे लङुपपत्तिश्च । **आवृत्तचक्षुरमृतत्वमिच्छन्** । चक्षुश्शब्द इन्द्रियमात्रपरः । स्वस्वविषयव्यावृत्तेन्द्रियो मुमुक्षुरित्यर्थः ॥ १ ॥

**पराचः कामाननुयन्ति बालाः** । अल्पप्रज्ञाः बाह्यान् काम्यमानान् विषयानेवावगच्छन्ति । **ते मृत्योर्यन्ति विततस्य पाशम्** । ते विस्तीर्णस्य संसारस्य बन्धनं यान्तीत्यर्थः । यद्वा **विततस्य** सर्वत्राप्रतिहताज्ञस्य **मृत्योर्**मम पाशं यान्तीत्यर्थः । **अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते । अथ**शब्दः प्रकृतविषयार्थो (यादर्थ्या?)न्तरपरिग्रहे । धीमन्तः प्रत्यगात्मन्येव ध्रुवममृतत्वं विदित्वा **इह** संसारमण्डले अध्रुवेषु पदार्थेषु कमपि न प्रार्थयन्ते । प्रत्यक्तत्त्वज्ञस्य सर्वं [4]जिहासितमिति भावः । परमात्मनस्सर्वजीवगताहन्तास्पदत्वेन मुख्याहमर्थत्वात् प्रत्यक्त्वमस्तीति द्रष्टव्यम् ॥ २ ॥

१. तृह हिंसायामिति पाठग्रहणे अतृणेट् इत्येव रूपं सिध्येत् , न तु अतृणदिति । अतः तृद्-हिंसायामिति पाठो ग्राह्यः । उतृदिर् हिंसानादरयोरिति धातुग्रहणं तद्रूपसिद्धेः ।

२. **परमात्मन** इत्यादिवाक्यं पूर्वमन्त्रे स्थितं चेत् , युक्ततरम् । एतदर्थः श्वेताश्वतरप्रकाशिकायां द्वितीयान्त्यव्याख्याने विशदमनुसन्धेयः ॥

1. व्यतृणादिति माध्व. तृणु कात्करणे इति तत्र व्याख्या । 2. पश्यति. शाङ्क· पराक्पश्यति. माध्व. 3. तृह् ग. त्रह ख. तृह[तृद] घ. 4. जिहासितव्यम् ग. घ.

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।
एतेनैव विजानाति किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ३ ॥

स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥

य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ ५ ॥

यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।

---

**येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् ।** मैथुनान् मिथुननिमित्तक-सुखविशेषानित्यर्थः । **एतेनैव विजानाति ।** निश्शेषं येन एतेनैव साधनेन जानातीत्यर्थः । 'तं देवा ज्योतिषां ज्योतिः' इति रूपादिप्रकाशकानामिन्द्रियाणां तदनुगृहीतानामेव कार्या-रम्भकत्वादिति भावः । **किमत्र परिशिष्यते**— किं तदप्रकाश्यमिति भाव. । **एतद्वै तत्**– [1]**तत्** पूर्वं प्राप्यतया निर्दिष्टं विष्णोः परमं पदम् **एतद्वै**– एतदेव एतन्मन्त्रप्रतिपाद्य[2]प्रत्यगात्म-स्वरूपमेवेत्यर्थः ॥ ३ ॥

**स्वप्नान्तं जागरितान्तश्चोभौ येनानुपश्यति ।** सकलं स्वाप्नप्रपञ्चं जाग्रत्प्रपञ्चं च मनआदीन्द्रियभावमापन्नेन येन परमात्मना लोकः पश्यतीत्यर्थः । **महान्तं विभुमात्मानं मत्वा धीरो न शोचति ।** तमिति शेषः । उक्तोऽर्थः ॥ ४ ॥

**य इदं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते ।** इदमिति लिङ्गव्यत्ययश्छान्दसः । इमम् **मध्वदम्**– 'ऋतं पिबन्तौ' इति निर्दिष्टं कर्मफलभोक्तारं जीवात्मानं 'गुहां प्रविष्टा' वित्युक्तरीत्या तस्यान्तिके कालत्रयवर्ति-चिदचिदीश्वरं च यो वेद, तं दुष्कृतकारिणमपि न निन्देदित्यर्थः । 'गुप्तिज्किद्भ्यस्सन' इत्यत्र जुगुप्साशब्दः निन्दार्थक उक्तः । 'जुगुप्साविरामप्रमादार्थानाम्' इति पञ्चमी । **एतद्वै तदि**ति पूर्ववत् ॥ ५ ॥

**यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यद्**[3] **भूते-भिर्व्यपश्यत ।** "अप एव ससर्जादौ तासु वीर्यमपासृजत । तदण्डमभवद्धैमं सहस्रांशु-समप्रभम् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥" इति स्मृत्युक्तरीत्या अद्भ्यः [4]अपादानेभ्यः व्यष्टिसृष्टेः पूर्वं यः अजायत, तं **तपसः**– सङ्कल्पमात्रादेव **पूर्वं जातम्**– 'यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानम्' इति श्रुत्युक्त-

---

1. पूर्वं प्राप्यतया निर्दिष्टं तत् परमं पदम् ग. 2. प्रतिपाद्यात्मस्वरूपम् ग. 3. यद् ख. यो घ. 4. उपादानेभ्यः घ.

**तिष्ठन्तं यो (यद्) भूतेभिर्व्यपश्यत[1] ॥ एतद्वै तत् ॥ ६ ॥**
**या प्राणेन संभव[2]त्यदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥ एतद्वै तत् ॥ ७ ॥**
**अरण्योर्निहितो जातवेदा गर्भइवेत्[3]सुभृतो गर्भिणीभिः ।**

रीत्या प्रथमं जातम्, **गुहां प्रविश्य तिष्ठन्तम्**—हृदयगुहां प्रविश्य वर्तमानम्, **भूतेभिः**—भूतैः देहेन्द्रियान्तःकरणादिभिरुपेतं चतुर्मुखम्, 'अयं सकलजगत्स्रष्टा स्यात्' इति कटाक्षेणेक्षतेत्यर्थः । **एतद्वै तत्**—उक्तोऽर्थः ॥ ६ ॥

**या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ।** अयं च मन्त्रः 'गुहां प्रविष्टा' विति सूत्रे भगवता भाष्यकृता व्याख्यातः । इत्थं हि भाष्यकृता, 'कर्मफलान्यत्तीति अदितिः जीव उच्यते । **प्राणेन संभवति**—प्राणेन सह वर्तते । **देवतामयी**—इन्द्रियाधीनभोगा । **गुहां प्रविश्य तिष्ठन्ती**—हृदयपुण्डरीककुहरवर्तिनी । **भूतेभिर्व्यजायत**—पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते' इति भाषितम् । **एतद्वै तत्** । **तत्** 'तदात्मकमित्यर्थः । अत्रैव **प्रकरणे** '**ब्रह्मजज्ञं देवमीड्यं विदित्वा**'इत्यत्र **देव**मित्यस्य परमात्मात्मकमिति व्याख्यातत्वात्, '**क्षेत्रज्ञं चापि मां विद्धि**'इति एतदुपबृंहणगीतावचनेऽपि **मां** मदात्मकमिति भाष्यकृतैव व्याख्यातत्वात् अपृथक्सिद्धविशेषणवाचिशब्दस्य विशेष्य इव अपृथक्सिद्धविशेष्यवाचिशब्दस्यापि विशेषणे निरूढत्वात् **तत्** तदात्मकमित्यर्थो युक्त इति द्रष्टव्यम् ॥ ७ ॥

**अरण्योर्निहितो जातवेदाः । अरण्योः** अधरोत्तरारण्योः स्थितोऽग्निः । **गर्भ इवेत् सुभृतो गर्भिणीभिः ।** गर्भिणीभिः पानभोजनादिना सुभृतो गर्भ इव । निहित इति पूर्वेणान्वयः । इदित्यवधारणे । **दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । दिवे-**

६. प्रथमयच्छब्दोऽपि परमात्मपरो भवितुमर्हति यः परमात्मा अद्भ्यः पूर्वमनिरुद्धरूपेणाजायतेति । अत उत्तरमन्त्र इव यच्छब्दद्वयमेकार्थकम् । यद्वा यच्छब्दद्वयमपि चतुर्मुखपरं भवेत्—यो ब्रह्मा व्यष्टिसृष्टेः पूर्वमद्भ्योऽजायत, यः स्वस्मात्पूर्वमेव सङ्कल्पमात्रादाविर्भूतं स्वहृदयगुहां प्रविश्य तिष्ठन्तं व्यूहरूपं भगवन्तं भूतैरुपेतो व्यपश्यदिति । अथापि यद्भूतेभिर्व्यपश्यतेति क्लीबयच्छब्दपाठस्याप्यनुसारेण, उत्तरमन्त्रे गुहाप्रवेशस्य जीवे कथनात्तदैकरूप्यमनुसृत्य चेत्थमुक्तम् ।

७. ननु "एतद्वै तदि"त्यस्य **तत्** ब्रह्म **एतत्** एतदन्तर्यामीत्यर्थे वक्तव्ये **एतत्** वस्तु **तत्** ब्रह्मात्मकमित्यर्थः कथं वर्ण्यत इत्याशङ्कायाम्, भाष्ये ईदृशरीतेरपि दर्शनात्तस्याश्च प्रमाणविरुद्धपरमतादृतसामानाधिकरण्यनिर्वाहप्रकारापेक्षया रीतिरियमपि श्रेयसीत्यभिप्रायकत्वान्नात्रानादर इत्याशयेनाह "अत्रैव **प्रकरण**" इत्यादि । विस्तरोऽस्मत्कृते ईशोपनिषदाचार्यभाष्यतात्पर्ये द्रष्टव्यः, १६ मन्त्रे ।

८. 'गर्भ इव सुभृत' इत्येव प्रायः पाठः । अत्र भाष्ये 'उदित्यवधारणे' इति प्रामाणिकपाठानुकूलं मूले गर्भ इवोत्सुभृत इति क्वचित्पठितम् । भावप्रकाशिकायां (१–४–६) 'गर्भ इवेत्सुभृत इति

**1. व्यपश्यति माध्व. 2. संविशति माध्व. 3. इव सुभृतः शाङ्क. माध्व. 4. एतदात्मकमित्यर्थः ग.**

दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ एतद्वै तत् ॥ ८ ॥
यतश्चोदेति सूर्यो अस्तं यत्र च गच्छति ।
तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ९ ॥
यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥
मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।

**दिवे**—अहन्यहनि, **जागृवद्भिः**—जागरणशीलैः अप्रमत्तैः, **हविष्मद्भिः**—आज्यादि हविःप्रदानप्रवृत्तैः ऋत्विग्भिः मनुष्यैः, **अग्निः** अग्रनेता अरण्योर्निहित इति योजना। **एतद्वै तत्**—एतत् अग्निस्वरूपं **तत्** पूर्वोक्तब्रह्मात्मकमित्यर्थः ॥ ८ ॥

**यतश्चोदेति सूर्यो अस्तं यत्र च गच्छति**[1] । यस्मात् ब्रह्मणस्सकाशात् सूर्य उदेति, **यत्र च** लयमेति । **तं देवास्सर्वे अर्पिताः** देवास्सर्वे तस्मिन्नात्मनि प्रतिष्ठिता इत्यर्थः । **तदु नात्येति कश्चन** तत् सर्वात्मकं ब्रह्म कोऽपि नातिक्रामति[2] । छायावदन्तर्यामिणो दुर्लङ्घत्वादिति भावः । **एतद्वै तत्**—उक्तोऽर्थः ॥ ९ ॥

ननु परमात्मनः [3]सर्वात्मत्वं न संभवति । अहमित्यहन्ताश्रयत्वेनानुसंधीयमानो ह्यात्मा । स च, अहमिहैवास्मीति देशान्तरव्यावृत्ततयाऽनुसन्धीयते । तस्य सर्वदेशकालवर्तिसर्वपदार्थात्मभूतत्वं कथमित्याशङ्क्याऽऽह— **यदेवेह तदमुत्र यदमुत्र तदन्विह** । **यदेव** परमात्मतत्त्वम् इह अत्र लोके अहमित्यनुसन्धीयमानतया आत्मभूतम्, **तदेव** लोकान्तरस्थानामपि आत्मभूतमित्यर्थः । ततश्च आत्मभेदो नास्तीत्यर्थः । अयमभिप्रायः— किं परमात्मतत्त्वविदाम् अहमिहैवेति प्रतीतिस्सर्वदेशकालवर्तिपदार्थात्मत्वबाधकतयोपन्यस्यते, उत तद्रहितानाम् । नाद्यः, तेषाम् अहमिहैवेत्यादिप्रतीतेरेवाभावात् । प्रत्युत 'अहं मनुरभवं सूर्यश्च' इति [4]सर्ववस्तुवर्तितयैवानुभवात् । न द्वितीयः; अतत्त्वविदामहंप्रतीतेर्जीवमात्रविषयत्वेन तत्र देशान्तरव्यावृत्तत्वप्रतीतेः तदानीमप्रतीतपरमात्मनि सर्वदेशवर्तिपदार्थात्मत्वविरोधित्वाभावादिति । **मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति** । **इह**— परमात्मनि भेदमिव यः पश्यति, स तु संसारात्संसारं प्राप्नोतीत्यर्थः ॥ १० ॥

नन्वस्माकं सर्वात्मभूतं परमात्मतत्त्वं कुतो[5]नोपलभ्यत इत्यत्राह—**मनसैवेदमाप्तव्यम्** । इदमात्मस्वरूपं विशुद्धमनोग्राह्यमित्यर्थः । उक्तमेवार्थं दृढीकरणायाभ्यस्यति—**नेह नानास्ति**

पठितमस्ति । तत्र श्रुतप्रकाशिकानिर्वाहाय भिन्नभिच्छाद्यनुसारी मन्त्रार्थवर्णनप्रकार एवान्यः । तत्र इदित्यस्य समुच्चयार्थकत्वमभिमतं स्यात् । इह तु कृत्स्नस्याग्निपरतयैव योजनात् इदिति अवधारणे इष्टं स्यादिति विमृश्यमास्मीत । अथ च गर्भ इवेत्सुभृत इति पठित्वा इदित्यवधारणे इत्येव भाष्यपाठः प्राच्ये अमुद्रितकोशे ह्यस्मदुपलब्धः । उ इति, इत् इति च अवधारणं प्रसिद्धम्, न पुनः उत् इति ।

1. अस्तं गच्छति यत्र च ख 2. अतिक्रमते ग. 3. सर्वात्मकत्वं ख. 4. सर्ववस्तुतयैव ख. 5. कुतो लभ्यते ग.

**मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥**
**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो[1] भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥ १२ ॥**

**किञ्चन । मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ।** स्पष्टोऽर्थः ॥ ११ ॥

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य ।** कालत्रयवर्तिनिखिलचेतनाचेतनेश्वरः पुरुषः, **मध्य आत्मनि**—उपासकशरीरे मध्ये अङ्गुष्ठपरिमाणस्सन्नास्ते । **न ततो विजुगुप्सते**—**ततः**- भूतभव्येशान[2]त्वादेव वात्सल्यातिशयाद्देहगतानपि[3] दोषान् भोग्यतया पश्यतीत्यर्थः ।

ननु, 'प्राणाधिपस्संचरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः,' 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इत्यादिश्रुतिस्मृतिषु अङ्गुष्ठमात्रत्वेन प्रतिपादितस्य जीवस्यैवास्मिन् मन्त्रे प्रतिपादनं किं न स्यात् । न च तस्य भूतभव्येशानत्वानुपपत्तिरिति वाच्यम्—प्रथमश्रुतजीवलिङ्गानुरोधेन चरमश्रुतभूतभव्येशानत्वस्य आपेक्षिकतया योजयितुं शक्यत्वादिति चेन्न—'शब्दादेव प्रमितः' इत्यधिकरणे एवमेव पूर्वपक्षं कृत्वा, 'हृदयावच्छेदनिबन्धनाङ्गुष्ठपरिमाणस्य परमात्मन्यपि संभवात्, 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः' इति तैत्तिरीयके, 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इति श्वेताश्वतरे चाङ्गुष्ठमात्रत्वस्य परमात्मन्यपि श्रवणात् असङ्कुचितभूतभव्येशितृत्वस्य अनन्यथासिद्धब्रह्मलिङ्गत्वादयं मन्त्रः परमात्मपर एव' इति सिद्धान्तितत्वात् ।

यत्त्वत्र कैश्चिदुच्यते—अङ्गुष्ठमात्रत्वं जीवलिङ्गमेव । अथापि 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति पूर्वार्धेन जीवमनूद्य, 'ईशानो भूतभव्यस्य' इत्यनेन परमात्मभावो विधीयत—इति—तदसमञ्जसम् । तथा हि सति परमात्मन्यङ्गुष्ठमात्रत्वसंभावनाप्रदर्शकस्य 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति सूत्रस्यासङ्गतिप्रसङ्गात् । ननु, 'नास्मिन् मन्त्रे जीवानुवादेन ब्रह्मभावो विधीयते, आराग्रमात्रतया प्रतिपन्नस्य जीवस्य अङ्गुष्ठमात्रत्वे प्रमाणाभावात्' इति तटस्थशङ्कापरिहारार्थं जीवस्याङ्गुष्ठमात्रत्वसाधनाय प्रवृत्तमिदं सूत्रमिति चेत्—तथाऽऽश्रयणस्य क्लिष्टत्वात् ।

ननु 'ईश्वरश्शर्व ईशानः' इति निघण्टुपाठेन ईशानशब्दस्य देवताविशेषे रूढत्वात्, 'शब्दादेव प्रमितः' इति सूत्रे, "'ईशानो भूतभव्यस्य' इति शब्दादेव । न च भूतभव्यस्य

११. **मन्त्रोऽयं बृहदारण्यकेऽपि** (४–४–१९) । मनसैवानुद्रष्टव्यमिति तु भेदः । अस्मदीय **परमार्थप्रकाशिकायां** एतदर्थविस्तरः ।

१२. **तत** इत्यस्य व्याख्यानं भूतभव्येशानत्वादेवेति । **ईशानं भूतभव्यस्येति** पञ्चममन्त्र इवात्र तत इत्यस्य तमित्यर्थे पर्यवसानं दुष्करमिति भावः ।

1. ईशानं शाङ्क. 2. भव्येश्वर ग. 3. देहगतानेव क.

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ॥ १३ ॥**
**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान् पृथक्पश्यँस्तानेवानु विधावति ॥ १४ ॥**
**यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ! ॥ १५ ॥**
**॥ इति द्वितीये प्रथमा वल्ली ॥**

सर्वस्येशितृत्वं कर्मवश्यस्य जीवस्योपपद्यते" इति भाष्यं व्याकुर्वद्भिर्व्यासार्यैः, 'ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात् ।....नात्र लिङ्गान्निर्णयः । किन्त्वीश्वरवाचिशब्दादेवेत्येवकाराभिप्रायः' इति व्याख्यातत्वात् ईशानशब्दस्य श्रुतित्वाभ्युपगमात् तयैव चेशानशब्दश्रुत्या जीवव्यावृत्तिवदेव (जीववदेव') नारायणस्यापि व्यावर्तितत्वेन रुद्रपरत्वमेव स्यादिति चेन्न— योगरूढिमतः पदस्य सन्निधाववयवार्थविशेषकपदान्तरसन्निधाने रूढ्यनुन्मेषस्य, 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' इत्यादिषु दर्शनात् । तत्र हि सरोरुहपदावयवार्थसरोविशेषकाग्रपदोपादानेन सरोरुहपदरूढिभङ्गस्य दर्शनात् । इतरथा पद्मानीति पदानुपादानापत्तेः । अत ईशानशब्दस्य न श्रुतित्वम् । [1]एतदस्वरसादेव व्यासार्यैरपि यथाश्रुतभाष्यानुगुण्येन यद्वेति पक्षान्तरस्य आश्रितत्वादित्यलमनिचर्चया । प्रकृतमनुसरामः । **एतद्वै तत् ।** [2]उक्तोऽर्थः ॥ १२ ॥

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।** शुष्केन्धनानलवत् प्रकाशमान इत्यर्थः । **ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ।** अद्यतनपदार्थजातं श्वस्तनपदार्थजातं कालत्रयवर्तिपदार्थजातमपि तदात्मकमित्यर्थः । **एतद्वै तत् ।** पूर्ववत् ॥ १३ ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु** [3]**विधावति ।** पर्वतमूर्ध्नि वृष्टं [4]प्रत्यन्तपर्वतेषु नानाभूततया पतित्वापतित्वा धावति । **एवं धर्मान् पृथक्पश्यन् तानेवानु विधावति ।** एवं परमात्मगतदेवान्तर्यामित्वमनुष्यान्तर्यामित्वादिधर्मान् पृथगधिकरणनिष्ठान् पश्यन् पर्वतनिर्झरपातमनुकृत्य संसारकुहरे पततीत्यर्थः ॥ १४ ॥

सर्वत्रैकात्मकत्वज्ञानस्य फलमाह— **यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**

**यद्वेति पक्षान्तरस्येति** । अयं भावः— ईशानशब्दस्यात्र यौगिकत्वाद्रूढ्यभावान्न श्रुतित्वमित्याशयेनैव पूर्वं फलफलिभावावसरे ईशानत्वं लिङ्गमित्युक्तत्वात् अत्र तदविरोधाय, 'ईशानशब्देन देहेन्द्रियाद्यपेक्षेशानत्वरूपसंकुचितार्थं विहाय असंकोचेन सर्वेशानत्वस्यैवोक्ततया शब्दस्वरसप्रतीताल्लिङ्गात्परमात्मसिद्धिरिति लिङ्गपरतयैवेदं श्रुतप्रकाशिकावाक्यं योजनीयम । तथाच यौगिकशब्दस्याश्रुतित्वेऽपि लिङ्गान्निर्णयस्वीकारेऽप्येवकारोपपादनार्थं यद्वेत्यारम्भ इति ।

१४. **तानिति** पूर्वोक्तधर्मानित्यर्थः । जीवः संसारदुर्गे पतितः देवमनुष्यादिशरीरभेदान् पुनः पुनर्भजते वस्तुतस्तत्तदन्तर्यामित्वाश्रयतदेकवस्तुविज्ञानविरहादिति तात्पर्यार्थः ॥

1. एतत्स्वरसादेव घ. 2. उक्तार्थम् ख. 3. पर्वतेष्वपि ख. 4. पर्यन्तपर्वतेषु ख.

॥ अथ तीयै द्वितीया श्रो ॥

हरिः ओम् । पुरमेकादशद्वारमजस्यावक्रचेतसः ।
अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते ॥ एतद्वै तत् ॥ १ ॥
हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ २ ॥

**एवं मुनेर्विजानत आत्मा भवति गौतम ।** यथा शुद्धजले शुद्धजलं योजितं तत्सदृशमेव भवति, न [1]कथञ्चिदपि विसदृशम् । **एवम्**—इत्थं विजानतः मननशीलस्य आत्माऽपि परमात्मज्ञानेन विशुद्धस्सन् विशुद्धेन परमात्मना समानो भवतीत्यर्थः । **गौतमे**ति प्राप्यवैभवं सूचयन् महर्षिं संबोधयति ॥ १५ ॥

॥ इति चतुर्थवल्लीभाष्यम् ॥

**पुरमेकादशद्वारमजस्यावक्रचेतसः ।** जननादिविक्रियारहितस्य ऋजुबुद्धेर्विवेकिन आत्मनः एकादशेन्द्रियलक्षणबहिर्निर्गमद्वारोपेतं शरीराख्यं पुरं भवति । 'पुरस्वामिनः यथा पुरं विविक्तं भवति, तथा शरीरमपि स्वात्मनो विविच्य ज्ञातं भवति । अविवेकिनस्तु देह आत्मैव भवती' ति भावः । **अनुष्ठाय न शोचति**—विविच्य जानन् देहानुबंधिभिः दुःखैः कामादिभिश्च विमुक्तो भवतीत्यर्थः । **विमुक्तश्च विमुच्यते**—जीवद्दशायामाध्यात्मिकादिदुःखरागद्वेषादिविमुक्त एव सन्, 'भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते' इति न्यायेन प्रारब्धकर्मावसाने अर्चिरादिना विरजां प्राप्य प्रकृतिसम्बन्धविमुक्तो भवतीत्यर्थः। **एतद्वै तत्**—एतन्मन्त्रप्रतिपाद्यमुक्तस्वरूपमपि परमात्मात्मकमेवेत्यर्थः ॥ १ ॥

पुनरप्यस्य सर्वात्मतामेव [2]द्रढयति **हंसश्शुचिषत् वसुरन्तरिक्षसत् होता वेदिषत् अतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ।** **हंसः**—सूर्यः शुचौ ग्रीष्मर्तौ सीदति वर्तत इति **शुचिषत्** । तेजस्वीति यावत् । वासयतीति **वसुः** वायुः । **अन्तरिक्षसत्**— अन्तरिक्षगतो वायुः । **होता वेदिषत्**—वेद्यां वर्त[3]मानः ऋत्विग्विशेषः, अग्निर्वा । **अतिथिर्दुरोणसत्**—दुरोणं-गृहम्, गृहागतोऽतिथिः । **नृषत्**—नृष्वात्मतया वर्तमानम्, **वरसत्**—वरेषु=देवेषु च तथा वर्तमानम्, ऋते सत्यलोके सीदतीति **ऋतसत्** । **व्योमसत्**—व्योम्नि परमपदे वर्तमानं च प्रत्यक्तत्त्वम्; **अब्जाः**—

---

**अब्जा गोजा** ऋतजा **अद्रिजा** इति पदानि **हंस** इत्यादिप्रक्रमानुसारेण प्रथमैकवचनान्तानि । "जनसनखनक्रमगमो विट्" (पा.३-२-६७) इति छन्दसि विड्विधानात् । नूनमिदमेवाभिप्रेत्य शाङ्करे

1. कि.चि ख. 2. द्रढयति घ. 3 वेद्यन्तर्विद्यमान. ग. वेद्यन्तर्वर्तमानः घ.

ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते ॥ एतद्वै तत् ॥ ४ ॥

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

---

जलजाः, **गोजाः**— भूजाः, **ऋतजाः**— यज्ञोत्पन्नाः कर्मफलभूताश्च स्वर्गादयः [इति यावत्[1]]। यद्वा चिरकालस्थायितया ऋतशब्दिताकाशजा इत्यर्थः । **अद्रिजाः**— पर्वतजाः, [2]एतत्सर्वं **बृहत् ऋतम्**— अपरिच्छिन्नसत्यरूपब्रह्मात्मकमित्यर्थः ॥ २ ॥

**ऊर्ध्वं प्राणमुन्नयति** । सर्वेषां हृदयगतः परमात्मा प्राणवायुमूर्ध्वमुखमुन्नमयति । **अपानं प्रत्यगस्यति** । अपानवायुमधोमुखं क्षिपति । **मध्ये वामनमासीनम्** । हृदयपुण्डरीकमध्ये आसीनं **वामनम्**— वननीयम्, भजनीयम् । अथवा हृदयपुण्डरीकपरिमिततया ह्रस्वपरिमाणमित्यर्थः । **विश्वे देवा उपासते** । तं सत्त्वप्रकृतयः सर्वेऽपि उपासत इत्यर्थः ॥ ३ ॥

एवं परमात्मानमुपासीनस्य, 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति श्रुत्युक्तरीत्या शरीरपात एवान्तरायः, न किंचित् कर्तव्यं परिशिष्यत इत्याह— **अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः । देहाद्विमुच्यमानस्य किमत्र परिशिष्यते** । **अस्य**— उपासकस्य **देहिनः**, **शरीरस्थस्य**— शरीरप्रतिष्ठितस्य दृढशरीरस्येति यावत् । एवम्भूतस्य वा, **विस्रंसमानस्य**— शिथिलीभवद्गात्रस्य वा, **देहाद्विमुच्यमानस्य**— म्रियमाणस्य वा किमत्र परिशिष्यते ? कृतकृत्यत्वात् कर्तव्यं किमपि नावशिष्यत इति भावः । **एतद्वै तत्**— पूर्ववत् ॥ ४ ॥

तस्य सर्वप्राणिप्राणनहेतुत्वरूपं महिमानमाह— **न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति** । स्पष्टोऽर्थः[3]। केनेतरेण जीवन्तीत्यत्राह— **यस्मिन्नेतावुपाश्रितौ** । यदधीनं प्राणापानयोरपि जीवनम्, तदधीनमेव सर्वेषां जीवनमिति भावः ॥५॥

---

'अप्सु शङ्खशुक्तिमकरादिरूपेण जायते' इत्यादिना एकवचनेनैव विवरणम् । अत इहापि भाष्ये एकवचनान्तपाठस्समुचितः । पाठो निरीक्ष्यः । यद्वा एकवचनव्युत्पत्तेः प्रामाणिकत्वेऽपि तदादरेण जात्येकवचनत्वसमर्थनापेक्षया सर्वस्य ब्रह्मात्मकताया वाच्यत्वाद् बहुवचनव्युत्पत्तिरेव युक्ततरेत्याशयस्स्यात् ॥

---

1. इति यावत् ग. घ. 2. एते सर्वे ख. 3. ग. कोशे अत्रेदं नास्ति । अन्ते भाव इत्यनन्तरं 'स्पष्टमन्यत्' इत्यस्ति ।

हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा[1] च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्ये ऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥
य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ८ ॥

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । गुह्यम्**—अतिरहस्यं सनातनं ब्रह्म ते पुनरपि प्रवक्ष्यामि । हन्तेति स्वगतम् आश्चर्ये । **यथा च मरणं प्राप्य आत्मा भवति गौतम** । हे गौतम! आत्मा **मरणं**-मोक्षं प्राप्य **यथा**-यत्प्रकारविशिष्टो भवति, तथा पुनरपि मुमुक्षवे रागाद्यनुपहताय उपदेशयोग्याय तुभ्यं वक्ष्यामीत्यर्थः ॥ ६ ॥

अधिकारिविशेषनिर्देशपरेण, "हन्त त" इत्यनेन सूचितमर्थं विवृणोति - **योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् । अन्ये**—परमात्मतत्त्वश्रवणविमुखाः त्वद्भिसदृशाः शरीरपरिग्रहाय ब्राह्मणादियोनिं प्रपद्यन्ते, अन्ये स्थावरभावमनुगच्छन्ति स्वानुष्ठितयज्ञादिकर्मोपासनानतिक्रमेण, "रमणीयचरणाः," "तं विद्याकर्मणी समन्वारभेते" इत्यादिश्रुत्यनुरोधादिति भावः ॥ ७ ॥

एवं शिष्यं प्ररोचनया अभिमुखीकृत्य प्रकृतमनुसरति----**य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः** । सर्वेषु सुप्तेषु जीवेषु—**कामंकामम्** । णमुलन्तमिदम् । सङ्कल्प्य सङ्कल्प्येत्यर्थः । न तु "सर्वान् कामान् छन्दतः प्रार्थयस्व" इति प्रकृताः पुत्रादयः कामशब्देन निर्दिश्यन्ते । अयं चार्थः सन्ध्याधिकरणभाष्यश्रुतप्रकाशिकयोः स्पष्टः—सङ्कल्प्य संकल्प्य स्वच्छन्दानुरोधेन निर्मिमाणः पुरुषो योऽस्ती[2]त्यर्थः । **तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन । एतद्वै तत्** । तदेव **शुक्रं**--प्रकाशकम् तदेवानन्याधीनममृतमुच्यत इत्यर्थः । शिष्टं स्पष्टम् । नित्यमुक्तानाममृतत्वसत्त्वेऽपि निरुपाधिकामृतत्वाभावात् तदेवामृतमित्यवधारणस्य नानुपपत्तिरिति द्रष्टव्यम् । एतेनामृतान्तरनिषेधात् मुक्तपरमात्मनोरभेदप्रत्याशा प्रत्युक्ता । [3]अत्रत्यामृतशब्दस्य निरुपाधिकामृतवाचित्वात् ॥

६. ननु ब्रह्मण एव निरूप्यमाणतया मध्ये, 'हन्त त इदं प्रवक्ष्यामी'ति केन विशेषेणोच्यत इति चेत्---केचित् संपादितमपि ब्रह्मज्ञानं संसारकुहरपरिभ्रमणार्थमेवोपयोजयन्ति । तद्विहाय मोक्षयत्नः कार्य इत्युपदेश एव विशेष इति । अलेदमपि किञ्चित्प्रतीयते इव- एतावदुपदिष्टं यद्ब्रह्म, तत् कीदृशदेवतास्वरूपमिति विवेक्तुमिदमारभ्यते । तथाच केचिद्योनिं स्रष्टारं ब्रह्माणं ब्रह्मेति मन्यन्ते । अन्ये स्थाणुं शिवम् । य पुनः बाह्यप्रपञ्चविलक्षणस्य स्वाप्नप्रपञ्चस्यापि सृष्टिस्थितिसंहारहेतुः, "उकारः स्वप्नो विष्णुर्देवता:" इत्यथर्वशिखोक्तः, स विष्णुरेव परं ब्रह्मेति स एव बाह्यसर्वलोकस्यापि नियन्ता । अत एवोक्तं प्राक् , सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिती'ति ज्ञाप्यत इति ॥

1. यथा मरण माध्व । 2. इत्यर्थ इति ग. कोशे नास्ति । 3. अत्रामृत ख.

**अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ ९ ॥**
**वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥ १० ॥**
**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥**
**एको वशी सर्वभूतान्तरात्मा एकं बीजं**[1] **बहुधा यः करोति ।**

एक एवात्मा सर्वेषामहमर्थतया आस्ते इत्यस्यार्थस्य दुर्बोधत्वात् तद्दृढीकरणाय पुनरप्युपदिशति—**अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव ।** यथा एकस्तेजोधातुः त्रिवृत्करणकृतव्याप्त्या अण्डान्तर्गतलोके प्रविष्टस्सन् , **रूपंरूपं**— रूपेरूपे 'यावद्भौतिकव्यक्ति[2]— वीप्सायां द्विर्वचनम् —**प्रतिरूपः**—प्रत्रुमं रूपं यस्य स तथोक्तः । सर्वासु भौतिकव्यक्तिषु तेजोधातोर्मिलितत्वेन प्रतिसङ्क्रान्तरूपत्वात् प्रतिरूपत्वमस्तीति द्रष्टव्यम् । **एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च** । तथा एक एव सन् परमात्मा प्रतिवस्तु[3]सङ्क्रान्तान्तर्यामिविग्रहो बहिश्च व्याप्नोतीत्यर्थः ॥ ९ ॥

उदाहरणान्तरमाह—**वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च** । पूर्ववत् ॥ १० ॥

आत्मत्वाविशेषेऽपि जीवात्मवत् दोषाः परमात्मनि न भवन्तीत्येतत् सदृष्टान्तमाह—**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ।** 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः', 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्' इति श्रुत्यनुसारेण यथा सूर्यश्चक्षुरभिमानितया तदन्तर्गतोऽपि बहिर्निर्गतैश्चक्षुर्मलादिभिर्न स्पृश्यते, तथा परमात्मा सर्वभूतेष्वात्मतया वर्तमानोऽपि तद्गतैर्दोषैर्न स्पृश्यते । तस्य स्वाभाविकापहतपाप्मत्वादिगुणयुक्ततया स्वेतरसमस्तबाह्यत्वात्— विलक्षणत्वादित्यर्थः ॥ ११ ॥

**एको वशी सर्वभूतान्तरात्मा एकं बीजं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।** **एकः**— समाभ्यधिकरहितः । **वशः**— इच्छासोऽस्यास्तीति **वशी** । 'जगद्वशेवर्ततेदम्[4]' इत्युक्तरीत्या वशवर्तिप्रपञ्चक[5] इत्यर्थः 'इमौ स्म मुनिशार्दूल किङ्करौ समुपस्थितौ' इत्युक्तरीत्या भक्तवश्य इति वाऽर्थः । **एकं बीजम्** 'तमः परे देव एकीभवति' इति श्रुत्युक्तरीत्या स्वेन एकीभूतम्[6]विभागावस्थं तमोलक्षणं बीजं

1. एकं रूपं बहुधा शाङ्क माध्व. 2. भौतिकव्यक्तिषु घ. 3. प्रतिवस्तुप्रतिसंक्रान्त ग. 4. जगद्वशेवर्तत. ग. घ. 5. इति वार्थः ग. 6. भूताविभाग ग. घ.

**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥**
**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिश्शाश्वती नेतरेषाम् ॥ १३ ॥**
**तदेतदिति मन्यन्ते निर्देश्यं परमं सुखम् ।**
**कथन्नु तद्विजानीयां किमु भाति विभाति [1]वा ॥ १४ ॥**
**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**

महदादिबहुविधप्रपञ्चरूपेण यः करोति, तम्, 'य आत्मनि तिष्ठन्' इत्युक्तरीत्या स्वान्तर्यामिणं ये पश्यन्ति, तेषामेव मुक्तिरित्यर्थः ॥ १२ ॥

**नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।** नित्यश्चेतन एक एव सन् बहूनां नित्यानां चेतनानामपेक्षितार्थान् अनायासेन प्रयच्छति । **तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्** । [2]स्पष्टोऽर्थः ॥ १३ ॥

एवमुक्तश्शिष्य आह — **तदेतदिति मन्यन्ते निर्देश्यं परमं सुखम् । कथन्नु तद्विजानीयां किमु भाति विभाति वा ।** **तत्** — अलौकिकं [3]परमानन्दरूपं ब्रह्म **एतदिति** करतलामलकवत् अपरोक्षं भवादृशाः निष्पन्नयोगा मन्यन्ते । भवादृशास्साक्षात्कर्तुं शक्नुवन्तीत्यर्थः । कथं रूपादिहीनं[4]ब्रह्मग्रहणासमर्थमानसोऽहं तत् विजानीयाम् । तत् किं दीप्तिमत्तया भासते । तत्रापि विस्पष्टं प्रकाशते । उत तेजोन्तरसंवलनान्न विस्पष्टं प्रकाशते इति प्रश्नः ॥ १४ ॥

परमात्मनः योगयुगालम्बनत्वाय[5], 'आदित्यवर्णं तमसः परस्तात्' 'सदैकरूपरूपाय' इति प्रमाणप्रतिपन्नशुभाश्रयदिव्यमङ्गलविग्रहोऽस्ति, तद्विशिष्टः परमात्मा विभाति सर्वातिशायिदीप्तिमानित्याह — **न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति** । अयं च मन्त्रः, 'ज्योतिर्दर्शनात्' इति सूत्रे, 'सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं च

१२-१३ इमौ मन्त्रौ श्वेताश्वतरीयेऽपि ; द्वादशमन्त्रे पूर्वार्धमन्यथा; त्रयोदशमन्त्रे उत्तरार्धमन्यथा ॥

१४. यद्यपीदमपि गुरुवाक्यतयैव सुयोजम्—तथापि 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हती-त्युक्तवान् मृत्युरेव 'कथन्नु तद्विजानीया'मिति कथयतीत्युक्त्यपेक्षया प्रश्नपरतयैव व्याख्यानमुचितम् । उत्तरमन्त्रस्यैतदुत्तररूपतायास्स्वरसतः प्रतीतेः । मननकर्तारः एतदिति निर्दिश्य कामं मन्वताम् विज्ञानमुपासनं तु दुष्करं प्रतीयते । किं तत् सूर्याद्युपकरणैर्भाति उत तन्निरपेक्षम् । किं विग्रहरहितं भाति उत विशिष्टमपीत्येवं प्रश्नः । 'किमु भाति न भाति वे'त्यपि पाठोऽस्ति । अत्र 'विस्पष्टम्' इति, उत्तरत्र 'विभाती'ति च भाष्ये दर्शनात् विभातीति पाठ इष्टः । वाशब्ददर्शितकोटयन्तरं, 'न विस्पष्ट'मित्यादिनोक्तमिति स्यात् ।

1. न भाति वा. माध्व. अस्मद्भाष्यान्धकोशेऽपि 'न भाति वे'ति शुद्धिपत्रे । 2. उत्तरार्धग्रहणेन, 'शिष्टं स्पष्टम्' इति ग. 3. परमात्मानन्दरूपं ग. 4. कथं रूपादिहीनं ब्रह्म ग्रहणासमर्थमानसोऽहं विजानीयाम् ग. 5. आलम्बनाय ग. घ.

**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥**

**॥ इति द्वितीये द्वितीया वल्ली ॥**

अङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यत ' इति भाष्येण विवृतः । इदं च भाष्यम्-- " 'न तत्र सूर्य ' इत्यादिमन्त्रे पूर्वार्धस्यार्थमाह--सर्वतेजसां छादकमिति । उत्तरार्धस्य पूर्वपादार्थमाह—सर्वतेजसां कारणभूतमिति । अनुभानं पश्चाद्भानम् । तेन कार्यकारणभावः सिद्धः । पौर्वापर्यनियमो हि कार्यकारणभाव इति भावः । चतुर्थपादार्थमाह—अनुग्राहकमिति । 'यस्यादित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणम् " इति व्यासार्यैर्विवृतम् । तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वं प्रथमपादार्थः; तेजोन्तरोत्पत्तौ तदुपादानद्रव्यानुग्राहकत्वरूपं निमित्तत्वं तृतीयपादार्थः; चाक्षुषरश्म्यनुग्राहकचन्द्रातपादेरिव उत्पन्नस्यापि तेजसः स्वसंबन्धेन स्वकार्यकरणसामर्थ्याधायकत्वलक्षणानुग्राहकत्वं चतुर्थपादार्थ इत्यप्यर्थस्तत्रैव द्रष्टव्यः ।

अधिष्ठानब्रह्मरूपभानव्यतिरिक्तभानशून्यत्वमध्यस्तप्रपञ्चस्य तृतीयपादार्थ इति यत् परैरुच्यते, तदयुक्तम् । तथा हि सति भान्तमिति कर्त्रर्थशतृप्रत्ययस्य 'शिष्यज्ञानं प्रकाशते' इतिवदभेदेऽपि कथञ्चित्संभवेऽपि अनुभातीत्यस्य[1] शब्दस्यायोगात् । न हि देवदत्त[2]गमनक्रियाव्यतिरिक्तगमनक्रियाशून्ये तिष्ठति यज्ञदत्ते, गच्छन्तं देवदत्तं यज्ञदत्तोऽनुगच्छतीति प्रयोगो दृष्टचरः । ननु वह्निमेव दहन्तम् अयोऽनुदहतीति प्रयोगो दृष्टचर इति चेत्--न, अयसः पृथक् दग्धृत्वाभावं निश्चितवतः तत्प्रतिपिपादयिषया तादृशप्रयोगस्य सम्प्रतिपन्नत्वाभावात् ।

ननु तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वमिति भवदभिमतार्थोऽपि न युज्यते, तदीयदीप्तिसाक्षात्कारवतामपि मुक्तानां तेजोन्तरसाक्षात्कारदर्शनेन सजातीयसंवलनाधीनाग्रहणलक्षणाभिभवस्याभावादिति[3] चेत्--उच्यते । बद्धविषयमेवैतत् । बद्धानां तत्साक्षात्कारप्रसक्तेरिदं कथमिति चेन्न । बद्धानामेवार्जुनादीनां तत्साक्षात्कारदर्शनात्[4] । यद्वा कालिदासकवौ परिगण्यमाने इतरः कुकविरकविरिवेति भाति ब्रह्मणि परिगण्यमाने सूर्यादितेजोन्तरं न भाति । अतस्तदेव ब्रह्म अतिभास्वररूपशालीति पूर्वार्धार्थः । 'तदीयदीप्तिसाक्षात्कारसंभवे तेजोन्तराणामभिभूतत्वम्' इति व्यासार्यवचनस्याप्ययमेवार्थः । इममेवार्थं इतरतेजसां स्वरू-

१५. **तमेव भान्त**मिति । "चक्षोस्सूर्यो अजायत" इत्यादिरीत्या जीवीयचक्षुराद्यधिष्ठातृदेवतानां भगवच्चक्षुरादिनिर्गतत्वादधिष्ठानसामर्थ्यम् । अत्रभूषणादिरूपभगवद्विग्रहस्थितनित्यसूर्यानुग्रहादेव च जातानां स्थितिः । 'सूर्यस्य तपतो लोकान् अग्नेश्चन्द्रस्य चाप्युत । अंशवो यत् प्रकाशन्ते मम ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः' (म. भा. शां. ३२९.५८) इति सूर्यादिकिरणानां भगवत्केशत्वमुक्तम् । एवमादिकमत्र भाव्यम् । 'न हि देवदत्ते'त्यादि । अत्र शा. रभ "यथा ज्वालोल्मुकादि अग्निसंयोगादग्निं दहन्तमनुदहति, न स्वतः ; तद्वत्" इति । मन्त्रोऽयं मुण्डके (४) श्वेताश्वतरीये (६) च पठ्यते ॥

1. व्यक्तः ख. 2. अनुशब्दस्य ख. घ. 3. देवदत्ते गमनक्रि...याशून्ये तिष्ठति यज्ञदत्ते ग.
4. अभावात् । बद्धानां तत्साक्षात्काराप्रसक्तेरिति चेत्-उच्यते, बद्धानामेव ख. ग.

॥ अथ द्वितीये तृतीया वल्ली ॥

**हरिः ओम् । ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थस्सनातनः ।**
**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिन् लोकाः श्रितास्सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ १ ॥**
**यदिदं किञ्च जगत् सर्वं प्राण एजति निस्सृतम् ।**

पोत्पत्तौ फलजनने च परमात्मानुग्रहसापेक्षत्वप्रदर्शकेन, 'तमेव भान्त' मित्युत्तरार्धेन द्रढयतीति न दोष इत्यवगन्तव्यम् ।·यद्वा— पूर्वार्धस्य यथाश्रुत एवार्थः । ननु अतिभास्वररूपवति सूर्यादौ प्रत्यक्षेणानुभूयमाने, न भातीति प्रत्यक्षविरुद्धं कथमभिधीयत इत्यत्राह— **तमेव भान्तमनुभातीति** । इदं च परिदृश्यमानं भास्वररूपं न स्वाभाविकम्, अपितु परमात्मदत्तं तदीयमेव तेजः । गीतं च भगवता, 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति । विवृतं चैतद्भगवता भाष्यकृता—'अखिलस्य जगतो भासकमेतेषामादित्यादीनां यत्तेजः, तन्मदीयं तेजः । तैस्तैराराधितेन मया तेभ्यो दत्तमिति विद्धि' इति । अतो [1]याचितकमण्डितपुरुषतुल्यानामेतेषां भास्वररूपशालिनां न भातीति व्यपदेशो युज्यत इति भावः ॥ १५ ॥

॥ इति पञ्चमवल्लीभाष्यम् ॥

---

**ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः**— अयं च मन्त्रखण्डः, 'ऊर्ध्वमूलमधश्शाखम्' इति गीताव्याख्यानावसरे भगवता भाष्यकृता व्याख्यातः । इत्थं हि तत्र भाष्यम्— "यं संसाराख्यमश्वत्थमूर्ध्वमूलमधश्शाखमव्ययं[2] प्राहुः श्रुतयः, 'ऊर्ध्वमूलो अवाक्शाख एषोऽश्वत्थः सनातनः', 'ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद सम्प्रति' इत्याद्याः । सप्तलोकोपरि निविष्टचतुर्मुखादित्वेन[3] तस्योर्ध्वमूलत्वम् । पृथिवीनिवासिसकलनरपशुमृगक्रिमिकीटपतङ्गस्थावरान्ततया अधश्शाखत्वम्" इति । [4]तद्विलक्षणमेव ब्रह्मेति दर्शयति— **तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ॥ तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत्** । पूर्वमेव व्याकृतोऽयं मन्त्रः ॥ १ ॥

**य इदं किंच जगत्सर्वं प्राण एजति निस्सृतं महद्भयं वज्रमुद्यतम्** अयं च मन्त्रखण्डः 'कम्पनात्' इति सूत्रे भगवता भाष्यकृता व्याख्यातः । तत्रामु मन्त्रं प्रस्तुत्य, "कृत्स्नस्य जगतः अस्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्संजातमहाभयनिमित्तमेजनं कम्पनं श्रूयते । तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयात् वज्रादिवोद्यतात् कृत्स्नं जगत्कम्पत इत्यर्थः । 'भयादस्याग्निस्तपति' इत्यनेनैकार्थ्यात् ।

1. अन्धकारे खद्योततुल्यानां ग 2. अव्ययमश्वत्थमिति पुनरश्वत्थपदं कोशेषु । 3. मुखस्यादित्वेन ग. 4. तल्लक्षण घ.

**महद् भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥**
**भयादस्याग्निस्तपति भयात्तपति सूर्यः ।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥**
**इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।**

**महद्भयं वज्रमुद्यत**मिति पञ्चम्यर्थे प्रथमा" इति भाषितम्[1]। विवृतं चैतत् श्रुतप्रकाशिकायाम्—'प्राण इति सप्तम्यन्तपदसामर्थ्यात् स्थितानामित्यध्याहारः । कुतो निस्सृतानामित्यपेक्षायां प्रकृतस्यैवापादनत्वमाह—तत इति । ....एजनं कम्पनमिति । एजृ कम्पन इति हि धातुः । प्रत्यवायभयात् स्वस्वकार्य(येषु) प्रवृत्तिः कम्पनम् । उद्यतवज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थ' इति । अत्र **महद्भयं वज्रमुद्यत**मिति चत्वारि पदानि पञ्चम्यर्थप्रथमान्तानि । आद्यं पञ्चम्यर्थप्रथमान्तपदद्वयं भयवाचि । उत्तरं तु पदद्वयं तद्धेतुभूतप्राणशब्दितपरब्रह्मपरमिति द्रष्टव्यम् । केचित्तु, 'बिभेत्यस्मादिति भयम् । भयानकमित्यर्थः । महाभयानकोद्यतवज्रवत् स्वस्मान्निस्सृतं सकलं जगत् प्राणशब्दितः[2]परमात्मा कम्पयति । एजिः ण्यर्थगर्भः' इत्य[3]मुमप्यर्थं वर्णयन्ति । **य एतद्विदुरमृतास्ते भवन्ति**— स्पष्टोऽर्थः । 'अत एव प्राण' इत्यधिकरणन्यायात् प्राणशब्दस्य परमात्मपरत्वे न विवाद इति द्रष्टव्यम् ॥ २ ॥

**भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः** । धावतिशब्दः इन्द्रादीनां [4]स्वस्वव्यापारप्रवृत्तिपरः । शिष्टं स्पष्टम् ॥ ३ ॥

**इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः** । शरीरस्य **विस्रसः**— विस्रंसनात् [5]पतनात्प्राक् **इह** लोके ब्रह्म बोद्धुं **अशकच्चेत्** अशक्नुवंश्चेत्— विकरणव्यत्ययः छान्दसः—

३. अहमित्युनुक्त्वा मृत्युरिति वचनं स्वगतमृत्युत्वाकारदर्शनाय, मृत्युत्वेऽप्यहं बिभेमीति; मृत्युपदाधिकृतसर्वव्यक्तिसङ्ग्रहाय च । पूर्वमपि 'मृत्युमुखात्प्रमुक्त''मित्युक्तम् ॥

४. इहेत्यस्य, 'यदेवेह तदमुत्रे'त्यत्र कल्पतरूक्तरीत्या शाङ्करस्वरसादेतच्छरीरे इत्यर्थे, 'प्राक् शरीरस्य विस्रस इति पुनरुक्तप्रायमिति 'इह लोके' इति भाषितम् । कथं मृत्युः इहेति भूलोकं निर्दिशेदिति चेत्—हस्तेन प्रदर्शयन्निर्दिशेत् । नचिकेतःशरीरनिर्देशेपि तदधिकरणभूलोकनिर्देश एव तात्पर्यमिति वा पितृलोकादिकथनात्तद्व्यावृत्तस्य लोकस्यैव वक्तव्यत्वात् । भोगभूम्यपेक्षया कर्मभूमौ तदुपासनं सुकरमिति भावः । एतद्विवरणार्थमेवोत्तरमन्त्रः । अत एव तत्र 'दर्शे' इति च्छेद स्योक्तमप्युपेक्ष्य 'आदर्शे' इति प्रकारान्तरानुसरणम् । तत्रापि प्रत्यङ्मुखत्वादिविपरीताकारः कथित इति चेत्—सत्यम् । तथापि लोकान्तरापेक्षयाऽत्र स्पष्टतैवेति । 'यद्वा ब्रह्मलोक'इत्यादिकं शाङ्करव्याख्यानान्वारोहेण । अस्तु वा ब्रह्मलोकव्यतिरिक्तलोकापेक्षयैवेह लोकेऽतिशयः । 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टि' रिति केनोपनिषदत्र स्मर्तव्या ।

1. भाषितमिति नास्ति ख.घ.क. 2. स्वस्मान्नि.सृतं प्राणशब्दितपरमात्मा ग. 3. एजतिर्ण्यर्थगर्भ इत्यमुमपि. घ. एजतीत्यस्य ण्यर्थगर्भो ण्यर्थं इत्यप्यमुमपि ग. 4. स्वव्यापार ग. घ. 5. पतनादिति नास्ति ख.

तत्स्सर्गे( र्वे )षु[1] लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥
यथादर्शे तथाऽत्मनि यथा स्वप्ने तथा पितृलोके ।
यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥ ५ ॥
इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् ।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥
इन्द्रियेभ्यः परं मनो मनसस्सत्त्वमुत्तमम् ।

**ततस्सर्गेषु[2] लोकेषु शरीरत्वाय कल्पते । ततः**— तस्मात् ज्ञानाभावाद्धेतोः सृज्यमानसर्वलोकेषु जन्मजरामरणादिमत्त्वलक्षणशरीरभाणत्वाय भवतीत्यर्थः । तस्मात् शरीरपातात्प्रागेव आत्मज्ञानाय यतेतेति भावः ॥ ४ ॥

आत्मनो दुर्बोधत्वमेवाह— **यथादर्शे तथाऽऽत्मनि** । यथा दर्शे चन्द्रिकाया अभावात् न स्पष्टः प्रतिभासः, तथा इह लोके आत्मनीत्यर्थः । यद्वा यथा **आदर्शे**— दर्पणे प्रतीयमानं वस्तु साक्षाद्दृष्टवस्तुवत् प्रत्यङ्मुखत्वादिकल्पितार्थानवरुद्धतया नोपलभ्यते, तथेहात्मविषयिणी प्रतीतिरित्यर्थः । लोकान्तरेऽपि तथेत्याह— **यथा स्वप्ने तथा पितृलोके** । यथा स्वप्नदर्शनस्य जाग्रद्दर्शनवत् सम्यक्तया संशयादिविरोधितया पुनरनुसन्धानयोग्यत्वाभावः, तथा पितृलोक इत्यर्थः । **यथाऽप्सु परीव ददृशे तथा गन्धर्वलोके** । यथा जलान्तःस्थवस्तुनो नेतरवत् स्पष्टप्रकाशः, तद्वत् परिददृश इव । न वस्तुतः परितो दृश्यत इत्यर्थः । गन्धर्वलोकेऽप्यापाततः प्रतीतिमात्रमित्यर्थः । **छायातपयोरिव ब्रह्मलोके**— यथा छायातपयोर्मिश्रणे शुद्धातपवर्तिपदार्थवत् नोपलम्भः, एवं ब्रह्मलोकेऽपि न सम्यगुपलम्भः । अतो दुरधिगममात्मतत्त्वमिति भावः । यद्वा— ब्रह्मलोके यद्यपि छायातपयोर्विविच्योपलम्भवत् आत्मानात्मस्वरूपयोर्विविच्योपलम्भस्संभवति, तथापि नात्रत्यानामात्मतत्त्वं सुलभमिति भावः ॥

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति** । पृथग्भूतानामुत्पद्यमानानामिन्द्रियाणाम् । **इन्द्रियाणा**मित्येतत् देहादीनामप्युपलक्षणम् । **उदयास्तमयौ च यत्** । **यदि**त्यव्ययं यावित्यर्थे । यौ उत्पादविनाशौ यश्च परस्परवैलक्षण्यलक्षण[3]पृथग्भावश्च([1])तान् सर्वान् इन्द्रियादिगतान् मत्वा धीरो न शोचतीत्यर्थः । परस्परवैलक्षण्योत्पादविनाशाः ज्ञानैकाकारे नित्ये आत्मनि न सन्तीति ज्ञात्वा न शोचतीत्यर्थः ॥ ६ ॥

देहविविक्तप्रत्यगात्मयाथात्म्यज्ञानेऽपि भगवच्छरणागतिरेवोपाय इति पूर्वोक्तं शरणवरणमेव प्रतिपादयति— **इन्द्रियेभ्यः परं मनो मनसस्सत्त्वमुत्तमम् । सत्त्वादधि**

---

**सर्गेष्वि**त्यस्य नानाकल्पेष्वित्यर्थस्संभवति । अथापि सर्वेष्विति पाठमपि मनसिकृत्य सृज्यमानसर्वलोकेष्वित्युक्तं स्यात् ॥

१. इन्द्रियाणां यौ उदयास्तमयौ तौ, पृथग्भावं च मत्वेति योजनायां तात्पर्यम् ॥

1. स्वर्गेषु—माध्व, सर्गेषु शाङ्क । 2. सर्वेषु ख. 3. लक्षणः पृथ. ख.

सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥

अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
[1]यद् (यं?)ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥

न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्[2] ।
हृदा मनीषा मनसाऽभिक्लृप्तो य[3] एनं(एतत्)विदुरमृतास्ते भवन्ति ॥ ९ ॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न [4]विचेष्टेत तामाहुः परमां गतिम् ॥ १० ॥

**महानात्मा महतोऽव्यक्तमुत्तमम्** ॥ **अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यद् ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति । इन्द्रियेभ्य** इत्येतत् अर्थानामप्युपलक्षणम् । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यनेनैकार्थ्यात् । **सत्त्व**शब्दो बुद्धिपरः । 'मनसस्तु परा बुद्धिः' इति पूर्वोक्तेः । **अलिङ्गः**—लिङ्गागम्यः । [5]परत्वं च वशीकार्यतायां विवक्षितम् । परस्य च वशीकरणं शरणागतिरेव । शिष्टं स्पष्टम् ॥ ७ ॥ ८ ॥

**न संदृशे तिष्ठति रूपमस्य** । अस्य **रूपं**—स्वरूपं विग्रहो वा व्यापकत्वादेव संदर्शन-विषये अभिमुखतया न तिष्ठतीत्यर्थः । अथवा दृश्यं नीलरूपादिकं नास्तीत्यर्थः । अत एव **न चक्षुषा पश्यति कश्चनैनम्** । स्पष्टोऽर्थः । **हृदा मनीषा मनसाऽभिक्लृप्तः** । अयमंशः 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र व्यासार्यैः, 'हृदेति भक्तिरुच्यते । मनीषेति धृतिः । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति पूर्वार्धमेकरूपं पठित्वा, 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' इति महाभारते उक्तत्वात्[6] । अभिक्लृप्तः = प्राह्यः' इति विवृत. । "धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति, साक्षात्करोति प्राप्नोतीत्यर्थः । 'भक्त्या त्वनन्यया शक्य.' इत्यनेनैकार्थ्यात्" इति वेदार्थसङ्ग्रहे प्रतिपादितम् । **य एनं विदुरमृतास्ते भवन्ति** । स्पष्टोऽर्थः ॥ ९ ॥

**यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह** । ज्ञायते अनेनेति व्युत्पत्त्या **ज्ञानानि**—इन्द्रियाणीत्यर्थः । "सप्त गतेः—"इत्यधिकरणे व्यासार्यैस्तथा व्याख्यातत्वात् । **बुद्धिश्च न विचेष्टेत** । अध्यवसायोपेतं मन एव बुद्धिशब्देनोच्यते । अत एव तत्र भाष्यम्, 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यते' इति । **तामाहुः परमां गतिम्** । 'शरीरान्तस्सञ्चरणं विहाय मोक्षार्थगमनं परमा गतिः' इति तत्रैव स्पष्टम् ॥ १० ॥

१. मन्त्रोऽयं तैत्तिरीयेऽपि (नारा. १.) उत्तरार्धे तत्र "य एनम्"इतिपाठः । उत्तरार्धं परं श्वेताश्वतरीये (३) तत्र पूर्वार्धश्च (४) पृथक्पृथक् तत्र ।

1. यं ज्ञात्वा शाङ्क. तं ज्ञात्वा माध्व. 2. कश्चिदेनम् माध्व । 3. य एनं माध्व. 4. विचेष्टति शाङ्क माध्व । 5. एतत्सर्वस्थाने अवशिष्टंस्पष्टमित्येतावन्मात्रम् ख. 6. उक्तम् ग. घ.

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । तां**— पूर्वमन्त्रनिर्दिष्टां बाह्याभ्यन्तरकरणधारणां परमां गतिं योग इति मन्यन्ते । उक्तं च व्यासार्यैः, "परमा गतिर्योग इत्यर्थः" इति । **अप्रमत्तस्तदा भवति** । इन्द्रियाणां निर्व्यापारत्व एव अवहितचित्तता भवति । चित्तावधानं किमर्थमित्यत्राह—**योगो हि प्रभवाप्ययौ** । योगस्य प्रतिक्षणापायशालितया अवधानमपेक्षितमिति भावः । यद्वा इष्टप्रभवानिष्टाप्ययलक्षणसर्वपुरुषार्थसाधनत्वाद्योगस्य तत्र अप्रमत्ततया भवितव्यमिति भावः ॥ ११ ॥

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा** । स्पष्टोऽर्थः । प्राणपादे—"सप्त गतेर्विशेषितत्वाच्च"[1] । इन्द्रियाणि सप्तैव । "सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहितास्सप्तसप्त" इति सप्तानामेव परलोकगतिश्रवणात् । "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत" इति योगदशायामिन्द्रियाणां परिगणितत्वाच्च सप्तैवेति प्राप्ते उच्यते—"हस्तादयस्तु स्थितेऽतो नैवम्"—शरीरे स्थिते आदानादिलक्षणकार्योपयोगित्वाद्धस्तादयोऽपि इन्द्रियाण्येव । अतो नैवम् । "दशेमे पुरुषे प्राणाः आत्मैकादशः" आत्मशब्देन मनोऽभिधीयते,— "इन्द्रियाणि दशैकं च", "एकादशं मनश्चात्र" इति श्रुतिस्मृतिभ्यां [इन्द्रियसङ्ख्या निश्चिता ।][2] न्यूनसंख्यावादा उपकारविशेषाभिप्रायाः, अधिकसंख्यावादाश्च मनोवृत्तिभेदादिति स्थितम् ॥ अमुमेवार्थमुपपादयति—**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते** । अस्तीति ब्रुवतः शब्दादन्यत्रेत्यर्थः । तस्योपनिषदेकगम्यत्वादिति भावः ॥ १२ ॥

**अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति** । तत्त्वं भावयतीति **तत्त्वभावः**—अन्तःकरणम् । तेन च परमात्मा अस्तीत्येवोपलब्धव्यः । वेदान्तवाक्यैरस्तीत्युपलब्धस्य मनसाऽपि अस्तीत्येवं मनननिदिध्यासने

१२ ननु सप्तेन्द्रियाणि प्रागुक्तानि, इदानीं वागपि । तत् कतीन्द्रियाणीति जिज्ञासायां तन्निर्णयकाधिकरणशरीरं दर्शयति—'प्राणपाद इति' । विशेषितत्वाच्चेतीति इतिशब्दपाठे, इत्यनेनेत्यर्थः । प्राप्ते इत्यत्र तदन्वयः ॥

1. विशेषितत्वाच्चेति इतिशब्दो ग. कोशे । 2. कुण्डलितं कोशेष्वदृष्टमप्यौचित्यात् शारीरकशास्त्रार्थदीपिकानुसारेण निवेशयन्ति ।

**अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥**
**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥**

कर्तव्ये इत्यर्थः । **उभयोर्हेत्वोः**, उभाभ्यां शब्दमनोरूपाभ्याम् अस्तीत्येवो**पलब्धस्य**—ज्ञातवतः —भुक्ता ब्राह्मणा इतिवदयं निर्देशः—**तत्त्वभावः प्रसीदति**—मनः प्रसन्नं भवति ।[1] निर्दुष्टं भवतीत्यर्थः ॥ १३ ॥

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि**[2]**श्रिताः। अथ मर्त्योऽमृतो भवति। कामाः**—दुर्विषयविषयकमनोरथाः हृद्गताः यदा शान्ता भवन्ति, तदनन्तरमेवायमुपासकः **अमृतो भवति**—विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरो भवतीत्यर्थः । **अत्र ब्रह्म समश्नुते**—अत्रैवोपासनवेलायां ब्रह्मानुभवतीत्यर्थः । 'समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य' इत्यत्र भाष्यम् "अनुपोष्य— शरीरेन्द्रियादिसंबन्धमदग्ध्वैव यदमृतत्वम् उत्तरपूर्वाघयोरश्लेष-विनाशरूपं प्राप्यते, तदुच्यते, 'यदा सर्वे प्रमुच्यन्ते' इत्यादिकया श्रुत्येत्यर्थः । 'अत्र ब्रह्म समश्नुते' इति च उपासनवेलायां यो ब्रह्मानुभवः तद्विषयमित्यभिप्रायः" इति ॥ १४ ॥

१३. अत्र यद्यपि परमात्मा अस्तीत्येव पूर्वमुपलब्धव्यः; अथोभयोर्जीवपरमात्मनोस्तत्त्वभावेन—'तद्योऽसौ सोऽहम्, योऽहं सोऽसौ' इत्युक्ततद्भावभावनया चोपलब्धव्यः । अस्तीत्येवोपलब्धस्य जीवात्मनः तत्त्वभावना सम्यङ् निष्पद्यते । अध्यात्मयोगाधिगमेन देवं मत्वेति पूर्वमुक्तं, एवं मत्त्वेत्यन्तमुपपाद्य, 'हर्षशोकौ जहाती'त्येतदुपपाद्यते उपरिमन्त्रेणेति सुवचम्—अथापि उभयोरिति पूर्वमन्त्रप्रस्तुतग्रहणं स्वरसम् । वाङ्मनसाद्यप्राप्यत्वकथनात् द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च कथमसाविति शङ्कापरिहारश्च कर्तव्योऽस्ति । अतो विलक्षणयोर्वाङ्मनसयोरत्र प्रवृत्त्या श्रवणादि सिध्यति । दर्शनं तु न चक्षुरायत्तम्; किन्तु तत्त्वभावरूपान्तःकरणकार्यमित्यपेक्षितमुच्यते इत्याशयेनान्यथा व्याचष्टे—तत्त्वमित्यादिना । नन्वयमर्थः स्वरसो भवितुमर्हति । प्रतीतिर्हि द्विविधा अस्तीति, नास्तीति च । आद्या विधिप्रतीतिर्भावप्रतीतिः अन्त्या च निषेधप्रतीतिरभावप्रतीतिरिति । तथा च, "असाधारणाकारेण ग्रहणं हि वस्तुनो ग्रहणम् । न च केवलमानन्दादि ब्रह्मणोऽसाधारणमाकारमुपस्थापयति । प्रत्यनीको ह्यानन्दादिः ब्रह्मणोऽसाधारणं रूपम्" इत्यक्षरध्यधिकरण (३–३–१४) भाष्यानुरोधेनेत्थमर्थस्संपद्यते—परमात्मा अस्तीत्येवोपलब्धव्यः । ज्ञानानन्दादिभावरूपेण ग्राह्यः । न तु शशशृङ्गादिवत् केवलनिषेधमात्रेण । एवं तत्त्वभावेन असाधारणहेयप्रत्यनीकत्वरूपधर्मभावेन चोपलब्धव्यः । उक्तयोरुभयोर्भावाभावरूपयोर्मध्ये भावरूपेणोपलम्भस्य परमात्मनोऽसाधारणोऽभावरूपधर्मोऽपि **प्रसीदति** ग्राह्यो भवति । "लब्धरूपे क्वचित्किंचित्तादृगेव निषिध्यते" इति न्यायेन अस्थूलमनण्वित्याद्याकारग्रहणात्पूर्वं ज्ञानानन्दादिग्रहणमावश्यकम् । तस्मादस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यत इति कथम्, अस्थूलमित्यादि श्रुत्यापि तदुपलम्भादिति न शङ्कनीयम् । तथा ब्रुवतोऽपि अस्तीति पूर्वमुपलब्धव्यत्वादिति चेत्—सत्यम्; तथापि ब्रुवतोऽन्यत्र नोपलभ्यत इत्युक्तौ मननध्यानदर्शनानि न सिध्यन्तीति पूर्वमन्त्रपूर्वोत्तरार्धानुरोधिशङ्कायास्स्वरसत्वात्तत्परिहारार्थमेवं व्याख्यातम् । **श्रुतप्रकाशिकायाम्** अस्तीत्येवोपलब्धव्य इत्यादिमन्त्रस्य जीवब्रह्मणोस्तादात्म्यविषयत्वं परमतं निरस्य जन्मादिषड्भावविकाररहित्यपरत्वमुक्तम् (३–३–२१) ॥

१४. अयं मन्त्रो **बृहदारण्यके** (६–४.) ऽपि ।

1. शान्तरागादिदोषं ख. घ. नाशान्त्यादिदोषं क. 2. स्थिताः ख.

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह (स्यैव?) ग्रन्थयः ।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥**

**शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥**

उक्तमेवार्थमादरेणाभ्यस्यन्[1], उपदेष्टव्यांशः एतावानेवेत्युपसंहरति—**यदा सर्वे प्रभिद्यन्ते हृदयस्यैव[2] ग्रन्थयः । अथ मर्त्योऽमृतो भवति** । ग्रन्थयः ग्रन्थिवद्दुर्मोचाः रागद्वेषादयो यदैव प्रमुच्यन्त इत्यर्थः । **एतावदनुशासनम्**—अनुशासनीयम् उपासकस्य कर्तव्यत्वेन उपदेष्टव्यमेतावदेव । वक्ष्यमाणमूर्धन्यनाडीनिष्क्रमणार्चिरादिगमनादिकं न साधकस्य कृत्यम्, किन्तु उपासनप्रीतभगवत्कृत्यमिति भावः ॥ १५ ॥

'विमुक्तश्च विमुच्यते' इति पूर्वमुक्तां द्वितीयां परममुक्तिमाह—**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका** । हृदयस्य प्रधाननाड्यः शतं चैका च सन्ति । तासां मध्ये एका सुषुम्नाख्या ब्रह्मनाडी मूर्धानमभि निस्सृता । **तयोर्ध्वमायन् अमृतत्वमेति** । तया नाड्या ऊर्ध्वं ब्रह्मलोकं गच्छन् देशविशेषविशिष्टब्रह्मप्राप्तिपूर्वकस्वस्वरूपाविर्भावलक्षणां मुक्तिं प्राप्नोति । **विष्वङ्ङन्या उत्क्रमणे भवन्ति** । अन्यास्तु नाड्यः **विष्वङ् उत्क्रमणे**—नानाविधसंसारमार्गोत्क्रमणायोपयुज्यन्ते । विष्वग्वितता नाड्योऽन्या[3] अन्योत्क्रमणे उपयुज्यन्त इति व्यासार्यैर्व्याख्यातम् ।

इदं च वाक्यं भगवता बादरायणेन उत्क्रान्तिपादे चिन्तितम् । तथा हि—मूर्धन्यया शताधिकया नाड्या विदुषो गमनं, अन्याभिरविदुष इति नियमो नोपपद्यते । नाडीनां भूयस्त्वात् अतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात् । 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती'ति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमित्येवं पूर्वपक्षे प्राप्ते-'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया' इति सूत्रेण सिद्धान्तितम् । तस्य चायमर्थः । तदोकः— तस्य जीवस्य ओकः = स्थानं हृदयम् अग्रज्वलनं = अग्रे ज्वलनं प्रकाशनं यस्य तदिदमग्रज्वलनम् । तेन अग्रज्वलनेन प्रकाशितद्वारो भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' इति श्रुतेः । एतावत् विद्वदविद्वत्साधारणम् । विद्वांस्तु शताधिकया मूर्धन्ययैव नाड्या उत्क्रामति । न चास्या नाड्या विदुषो दुर्विवेचत्वम् ।

१५. पूर्वं जीवद्दशायां कर्मविमोक्ष उक्तः । इह प्रायणकालिको हृदयग्रन्थिभेद उच्यते इत्येवंप्रकारेण शेषद्वयस्य सुवचत्वेऽपि सर्वं सर्वेषां विवक्षितमस्तु, उत्तरमन्त्रस्योपसंहारप्रधानत्वादित्याशयेनाह—उक्तमेवेति ॥

1. अभ्यस्य ग. 2. अयं ख पाठः । एतदनुकूलं भाष्यम् । अन्यत्र हृदयस्येह । 3. अन्या इति कोशेषु नास्ति ।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।**
**तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।**
**तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥**
**मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।**
**ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥**

विद्वान् हि परमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्यात् विद्याशेषभूततया आत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति । ततस्तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यत इति । प्रकृतमनुसरामः ॥ १६ ॥

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।** स्पष्टोऽर्थः । **तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।** यथा देवदत्तः स्वाच्छरीराद्विलक्षणः इत्युक्ते स्वशब्दः सन्निधानाद्देवदत्तसम्बन्धिपरामर्शी, एवं पूर्वनिर्दिष्टान्तरात्मसंबन्धिपरामर्शी स्वशब्दः । ततश्चायमर्थः तं जनानामन्तरात्मानं तच्छरीरभूतात् जनशब्दितचेतनात् **प्रवृहेत्**—विविच्य जानीयात् । 'जुष्टं यदा पश्यत्यन्यमीशम्' इति श्रुत्युक्तरीत्या धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं जानीयादित्यर्थः । **मुञ्जात्**—तृणविशेषात् । **इषीकां**—तन्मध्यवर्तिस्थूलतृणविशेषमिव । **धैर्येण**— ज्ञानकौशलेनेति पूर्वेणान्वयः । **तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ।** उक्तोऽर्थः । द्विर्वचनमुपदेशसमाप्त्यर्थम् ॥ १७ ॥

आख्यायिकार्थमुपसंहरति— **मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युः ।** नचिकेता मृत्युप्रोक्तामात्मविद्यां, 'यदा पञ्च' इत्यादिना उक्तं योगविधिं च **लब्ध्वा**—प्राप्य, 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुत्युक्तरीत्या ब्रह्म प्राप्य आविर्भूतगुणाष्टकोऽभूदित्यर्थः । **अन्योऽप्येवं यो वित् अध्यात्ममेव**—अध्यात्मविद्यां यः अन्योऽपि वेत्ति, सोपि एवमेव नचिकेता इवैव भवतीत्यर्थः ॥ १८ ॥



१७. पूर्वार्धं श्वेताश्वतरीयेऽपि (३) । संबन्धीति स्वादिनि विशेष्यं कृत्वा तच्छरीरभूतात्स्वात् स्वात्मन इत्यपि सुवचम् । एवञ्च स्वशब्दस्य प्रधानकर्तृपरत्वेऽपि न दोषः । ननु कारकचक्रप्रयोक्तृतया कारकान्तरापेक्षया कर्तुः प्राधान्यम् ; प्रधानपरामर्शी च स्वशब्द इति कथमत्र देवदत्तदृष्टान्तेन स्वशब्देन परमात्मपरामर्शवचनमिति चेन्न, कर्तुरपि क्रियाङ्गत्वात् सर्वापेक्षया कर्मकारकस्यैव प्रधानत्वात्प्रधानपरामर्शिना स्वशब्देन परमात्मपरामर्श इत्याशयात् । फलभोक्तृतया कर्तुः पुरुषस्यैव सर्वप्राधान्यात्स एव परामृष्टव्य इति चेत्—अस्तु तर्हि समनन्तरोक्तः प्रकार इति । प्रवृहेत्. वृह उद्यमने ॥

१८. अन्योऽपि योऽध्यात्ममेवंवित्, स ब्रह्म प्राप्तो विरजा विमृत्युर्भवतीति शाङ्करयोजनायां तच्छब्दघटितवाक्यं कृत्स्नमध्याहार्यम् । अतो लाघवादन्योपि योऽध्यात्मं वित्, स एवमेव भवतीति योजितम् ॥

1. नाचिकेतो माध्व । 2. इत्याद्युक्तं घ. इत्यादिनोक्त ग. 3. एवेत्यधिकं ख.

स ह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु । मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ॥
हरिः ॐ ॥

इति द्वितीयाध्याये तृतीयवल्ली, आदितः षष्ठवल्ली ॥

॥ इति कठोपनिषत् ॥

श्रीः

शिष्याचार्ययोः शास्त्रीयनियमातिलङ्घनकृतदोषप्रशमनार्था शान्तिरुच्यते । **स ह नाववतु**—सः विद्याप्रकाशितः परमात्मा । हशब्दः प्रसिद्धौ । **नौ** शिष्याचार्यौ **अवतु**—स्वस्वरूपप्रकाशनेन रक्षतु । **सह नौ भुनक्तु**— विद्याप्रचयद्वारा आवां सहैव परिपालयतु । यद्वा विश्लेषमन्तरेण आवां सहितावेव यथा स्याव, तथा परिपालयत्वित्यर्थः । **सह वीर्यं करवावहै**—सह सनियमकविद्याप्रदानेन विद्यायाम्सामर्थ्यं निष्पादयावहै । नियमाभावे विद्या निर्वीर्या भवतीति भावः । **तेजस्वि नावधीतमस्तु**—**नौ** आवयोः यदधीतम्, तत् **तेजस्वि अस्तु**— वीर्यवत्तरं भवत्वित्यर्थः । **मा विद्विषावहै**- 'यश्चाधर्मेण विब्रूते यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति' इति स्मृत्युक्तरीत्या अधर्माध्ययनाध्यापननिमित्तो द्वेष आवयोर्मा भूदित्यर्थः । **ॐ शान्तिश्शान्तिश्शान्तिः** । त्रिर्वचनं सर्वदोषशान्त्यर्थम् ॥

इयञ्चोपनिषत् भगवत्परैरेव भगवता बादरायणेन समन्वयाध्याये त्रिभिरधिकरणैर्निर्णीतम्[1] । तत्र—

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' इति वाक्ये ब्रह्मक्षत्रयोरोदनत्व[1]नि(?)रूपणेन भोज्यत्वस्य वा भोग्यत्वस्य वा प्रतीतेः तत्प्रतिसंबन्धी, यस्येति षष्ठ्यन्तयच्छब्दनिर्दिष्टो भोक्ता जीव एव स्यात्; परमात्मनो भोक्तृत्वासंभवादिति पूर्वपक्षं कृत्वा, 'अत्ता चराचरग्रहणात्, प्रकरणाच्च, गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्, विशेषणाच्च' इति चतुर्भिस्सूत्रैस्सिद्धान्तः कृतः । तेषां चायमर्थः । 'उभे भवत ओदनः' इति ओदनप्रतिसम्बन्धितया प्रतीयमानः अत्ता परमात्मैव । ब्रह्मक्षत्रशब्दगृहीतनिखिलचराचरसंहर्तृत्वस्यात्र मन्त्रे प्रतिपादनात्— अत्र ब्रह्मक्षत्रशब्दयोः निखिलचराचरलक्षकत्वप्रकारः, ओदनशब्दस्य विनाश्यत्वलक्षकत्वप्रकारश्च एतन्मन्त्रव्याख्यानावसरे प्रतिपादितस्तत्रैवानुसंधेयः— 'महान्तं विभुमात्मानम्' इति प्रस्तुतत्वेन तस्य ब्रह्मप्रकरणमध्यगतत्वाच्च । ननु, 'ऋतं पिबन्तौ'

1. निर्णीता ग, ओदनत्वरूपेण ख. (ओदनत्वरूपणेन ?)

इत्युत्तरमन्त्रे कर्मफलभोगान्वयिनोरेव प्रतिपादनात्, परमात्मनश्च जीववत् कर्तृत्वेन वा अन्तः-करणवत् करणत्वेन वाऽन्वयासंभवात् परमात्मप्रकरणमध्यगतत्वं नास्तीत्याशङ्क्योक्तम्, 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति। गुहां प्रविष्टौ जीवपरमात्मानावेव । तयोरेवास्मिन् प्रकरणे गुहाप्रवेशदर्शनात् । 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्' इति परमात्मनो गुहाप्रवेशः श्रूयते । 'या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती' इति जीवस्यापि गुहा-प्रवेशो दृश्यते । अतः द्वयोरपि गुहाप्रवेशदर्शनात् तयोरेव पिबद्[1] पिबतोश्छत्रिन्यायेन 'ऋतं पिबन्तौ' इति निर्देशस्य संभवात्, ऋतं पिबन्ताविति मन्त्रेण न परमात्मप्रकरणविच्छेद-शङ्काशङ्कः । 'विशेषणाच्च' । अस्मिन् प्रकरणे 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इति जीव-परयोरुपास्यत्वोपासकत्वादिना विशेषितत्वात् तयोरेवोपासनसौकर्याय एकाधिकरणस्थत्वप्रतिपाद-नार्थत्वात् ऋतं पिबन्ताविति मन्त्रस्य जीवपरप्रतिपादकत्वमेव । अतः, 'यस्य ब्रह्म च क्षत्रं च' इति मन्त्रः परमात्मपर एवेति निर्णीतम् ॥



तथा— 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते' इति मन्त्रे अङ्गुष्ठमात्रतया निर्दिश्यमानो जीव एव: अङ्गुष्ठमात्रत्वस्य जीवधर्म-तया, 'प्राणाधिपस्संचरति स्वकर्मभिः । अङ्गुष्ठमात्रो रवितुल्यरूपः', 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति श्रुतिस्मृतिप्रसिद्धत्वादिति पूर्वपक्षं कृत्वा—'शब्दादेव प्रमितः', 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्', 'कम्पनात्', 'ज्योतिर्दर्शनात्' इति चतुर्भिस्सूत्रैः सिद्धान्तः कृतः । तेषाञ्चायमर्थः । अङ्गुष्ठप्रमितः परमात्मा ; शब्दादेव 'ईशानो भूतभव्यस्य' इति ईश्वरत्ववाचकेशानशब्दादेव । ननु कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह— 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्'। हृदि हृदये परमात्मनो वर्तमानत्वात् तदपेक्षया अङ्गुष्ठ-मात्रत्वमुपपद्यते । न च खरतुरगादीनामङ्गुष्ठशून्यानां हृदयस्याङ्गुष्ठप्रमितत्वाभावात् तदन्तर्व-र्तिनः परमात्मनः कथमङ्गुष्ठमात्रत्वमिति वाच्यम् । उपासनाविधायिशास्त्रस्य मनुष्याधिकारि-कत्वात् तेषां चाङ्गुष्ठसंभवात् तद्धृदयवर्तिनः अङ्गुष्ठसमपरिमाणहृदयावच्छेदनिबन्धनाङ्गुष्ठप्रमितत्वे नानुपपत्तिः । 'कम्पनात्' । 'यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतम्' इति समस्तप्राणिकम्पनहेतुभयहेतुत्वस्यास्मिन्नङ्गुष्ठप्रमिते आम्नानात् तस्य च परमात्मधर्मत्वस्य 'भीषास्माद्वातः पवते' इत्यादिश्रुतिप्रतिपन्नत्वात् अङ्गुष्ठप्रमितः परमात्मा । 'ज्योतिर्दर्शनात्' । 'न तत्र सूर्यो भाति न चन्द्रतारकम्' इति अङ्गुष्ठप्रमिते सकलतेजश्छा-दकज्योतिस्सम्बन्धप्रतिपादनात् तादृशज्योतिस्सम्बन्धस्य आथर्वणे ब्रह्मसम्बन्धितया प्रतिपादि-तत्वाच्च अङ्गुष्ठप्रमितः परमात्मेत्यर्थः ॥

1. पिबतोः ग.

तथा—'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।' इति वाक्ये सांख्यप्रक्रियाप्रत्यभिज्ञानात् पञ्चविंशातिरिक्तपुरुषनिषेधाच्च सांख्याभिमतमब्रह्मात्मकं प्रधानमेव अव्यक्तशब्देनाभिधीयत इति, 'आनुमानिकमप्येकेषामिति चेत' इति सूत्रखण्डेन पूर्वपक्षं कृत्वा '—शरीररूपकविन्यस्तगृहीतेर्दर्शयति च', 'सूक्ष्मं तु तदर्हत्वात्', 'तदधीनत्वादर्थवत्', 'ज्ञेयत्वावचनाच्च', 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्', 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' 'महद्वच्च' इति सप्तभिः सूत्रैस्सिद्धान्तः कृतः। तेषाञ्चायमर्थः— आनुमानिकं नाव्यक्तशब्दाभिलप्यम्। उपासनोपयोगिवशीकरणाय, 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इति वाक्ये रथिरथादिभावेन रूपितेषु आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथरूपकात्मना, 'शरीरं रथमेव च' इति विन्यस्तस्य शरीरस्यैवाव्यक्तशब्देन ग्रहणसम्भवात्। अस्मिंश्च प्रकरणे इन्द्रियादिवशीकरणप्रकारस्यैव, 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादौ दर्शनात्[1], तदनुसारेणाव्यक्तशब्देन शरीरमेव गृह्यते। ननु कथमव्यक्तशब्देन व्यक्तस्य शरीरस्याभिधानम्। तत्राह—'सूक्ष्मं तु तदर्हत्वात्'। भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति। ततश्च कारणवाचिना अव्यक्तशब्देन स्थूलं शरीरमेवोपचारादुच्यत इत्यर्थः। नन्वव्यक्त[2]शब्दस्य मुख्य एवार्थोऽस्तु, कुतः स्थूलशरीरे लक्षणा अभ्युपगन्तव्येत्यत्राह—तदर्हत्वादिति। स्थूलशरीरस्यैव कार्यार्हत्वात्, तस्यैव वशीकार्यत्वाय प्रतिपादनस्यापेक्षितत्वात् अव्यक्तशब्देन कारणवाचिना स्थूलशरीरलक्षणा उचितेति भावः। ननु यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते, कापिलतन्त्रसिद्धोपादाने कः प्रद्वेष इत्यत्राह—'तदधीनत्वादर्थवत्'। अस्मन्मते अव्यक्तस्य परमात्माधीनतया तदधिष्ठितत्वेन प्रयोजनवत्त्वमस्ति; सांख्यमते तदनभ्युपगमात् तस्य निष्प्रयोजनत्वमिति भावः। 'ज्ञेयत्वावचनाच्च'। यदि तन्त्रसिद्ध[3]मव्यक्तमेवाविवक्षिष्यत, तदाऽस्य ज्ञेयत्वमवक्ष्य[4]त्। व्यक्ताव्यक्तज्ञविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्। न चास्य ज्ञेयत्वमुच्यते। अतो न तन्त्रसिद्धस्येह ग्रहणम्। 'वदतीति चेन्न प्राज्ञो हि प्रकरणात्'। 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव श्रुतिर्वदतीति चेन्न। 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति प्राज्ञस्य परमात्मनः प्रकरणात् स एव अशब्दमस्पर्शमिति मन्त्रे ज्ञेयत्वेन निर्दिश्यते, न तन्त्रसिद्धमव्यक्तम्। 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च'। अस्मिन् प्रकरणे हि उपायोपेयोपेतॄणां त्रयाणामेव ज्ञेयत्वोपन्यासः, 'अन्यत्र धर्मादन्यत्राधर्मात्–' इति प्रश्नश्च दृश्यते, नाव्यक्तादेः। 'महद्वच्च'। यथा 'बुद्धेरात्मा महान्

1. इत्यादिदर्शनात् ग. 2. ननूक्तशब्दस्य ग. घ. 3. सिद्धमेवाविवक्षिष्यत्, ग. घ.
4. अविवक्षिष्यत् ग. घ.

परः' इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥

अत इयमुपनिषत् सर्वाऽपि परमात्मपरेति त्रिभिरधिकरणैर्निर्णीतम् ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजस्स मुनिराद्रियतां मदुक्तिम् ॥

॥ इति षष्ठवल्लीभाष्यम् ॥

इति
श्रीमत्तातयार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकाल-
मुनिपादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः
कृतिषु
**कठोपनिषत्प्रकाशिका ॥**
श्रीरस्तु। शुभमस्तु।

---

भगवज्जन्मतत्त्वज्ञो जन्म नैतीति युज्यताम् ।
मृत्युं प्राप्तोऽप्यमृत्युर्यन्नचिकेतास्तदद्भुतम् ॥

यः केनोपनिषद्भाष्यपरिष्कारं प्रणीतवान् ।
कठोपनिषदो भाष्यपरिष्कारमयं व्यधात् ॥

**इति वात्स्यवीरराघवाचार्यविरचितः कठोपनिषद्भाष्यपरिष्कारः ॥**

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

**॥ शुभमस्तु ॥**

श्री तिरुमल तिरुपति देवस्थान मुद्रणालयः तिरुपति— प्रति ५००. १५-८-४८.

श्रीः

## श्रुत्यन्तरगताः कठोपनिषद्देशाः ।

| | |
|---|---|
| वल्ली १—उशन्नित्यादि विवेशेत्यन्तं तै.ब्रा.३- [१-१८ | वल्ली ५—१२ श्वे. उ. ६. ख. |
| ,, २—५ मु.उ. १. २ ख. | ,, ५—१३ पूर्वार्धम् श्वे. उ. ६ ख. |
| ,, २—२० तै.ना. १०.; श्वे.उ.३ अ. | ,, ५—१५ मु. उ. ४. श्वे. उ. ६. |
| ,, २—२३ मु. उ. ६. ख. | ,, ६—९. तै.ना. १-१० श्वे.उ.३: ४ ख. |
| ,, ४—११ बृ. ६-४-१९. | ,, ,, १४ बृ. ६-४-७. |
| ,, ५—२ तै. ना. १०-६ : ४७-२ | ,, ,, १७ पूर्वार्धम् श्वे.उ. ३ ख. |

परंतु क्वचित् क्वचिदानुपूर्व्यामीषद्भेदः परिष्कारतोऽवगन्तव्यः ॥

### महर्षिनाम.

वाजश्रवस औद्दालकिरारुणिर्गौतमः । (१-१, १०, ११)

तस्य पुत्रो नचिकेता. गौतमः (१-१ : ४-१५ ; ५-६.)

मृत्युनामानि — मृत्युः १-४. यमः १-७. वैवस्वतः १-७, अन्तकः १-२६.

### अपूर्वपदानि.

| | |
|---|---|
| आजायते १-६ प्रमृष्टम १—१० | अङ्गुष्ठमात्रः ४—१२ : ४-१३ ; ६-१७ |
| अतिसृज १—२२. अत्यस्राक्षीः २-११ | प्रवृह्य २ १३. प्रवृहेत् ६—१७ |
| सांपरायः १—३० ; २-६ | त्रिणाचिकेतः १-१७,१८. ब्रह्मजज्ञः १-१७ |
| सृङ्का १—१६ ; २-३ इत्था २-२५ | नाचिकेत १-१८, ३-१. दन्द्रम्यमाणः २-५ |
| स्वप्नान्तः, जागरितान्तः ४-४. | व्यतृणत् ४-१. अदितिः ४-७ |
| दुरोणम् ५—२ प्रतिरूपः ५-१० | अश्वत्थः ६-१. वामनः ५-३. उशन् १-१ |

### कठोपनिषद्भाष्यगताः शारीरकविचाराः । पृष्ठ.



### कठोपनिषद्विषयक शारीरकाधिकरणत्रयम् ।

# पूर्वमीमांसाविचाराः ।



* भाष्ये संदिग्धेषु इति शुद्धपाठो भाव्यः ।

## परिशिष्टम् ।

१–१. **स्वस्तय** इति । स्वस्त्यविनाशीति अग्निरभिपूजित इति च निरुक्तम् । अविनाशि, अविनाशः कल्याणम् इत्यर्थमाहुः । अत्र अस्तिपदं भूतिपदस्थाने भूभावं विना प्रयुक्तम् ; तस्य सु इत्यनेन कर्मधारयो बहुव्रीहिर्वा, स्वस्तये, स्वस्तिभिरित्यादौ ' इति भाष्याशयस्स्यात् । अस–क्तिच् अस्ति इति वाचस्पत्ये ।

२–१३. **मोदनीयम्** प्रीणनीय परमात्मानमित्यर्थो युक्तः । मुक्तो ऐकान्तिकनित्यकिङ्करः श्रियःपतिं प्रहर्षयति । तथा कृत्वा च मोदत इति ।

२–२१ **मदामदम्** आनीतत्वदरगन्तृत्वादिपूर्वोक्तधर्मवत् जीवद्वारा घटनीयमदरूपत्वामदरूपत्वोक्ते-रत्र भाष्ये धर्माध्यस्तमितिपाठो युक्तः । धर्ममध्यस्थमिति पाठे तु मदामदान्तर्यामिमात्रतया तदस्पृष्टत्वस्या-नस्यकथनम्, " तं यदन्तरा " इतिवत् ।

टिप्पण्यां प्रमाणवाक्यग्रहणस्थलेषु आकरनिर्देशः तत्रतत्र कृत एवास्ति । यत्र नास्ति, तावन्मात्रमिह ।

| पृ. | | | पृ. | | |
|---|---|---|---|---|---|
| ३. | एतद्ध स्म वै | तै. ब्रा. ३-११-८ | ३७. | पराधिकरण | ब्र. सू.३-२-६(३०) |
| ,, | अनसन्तात् | पा. ५-४-१०३ | ५५. | उकारः स्वप्न | अथर्वशिखार्थानुवादः |
| १०. | त्रिसुपर्णं पठन्ति. | तै. ना. ४५-१ | ५८. | चक्षोस्सूर्यः | पुरुषसूक्तम् |
| १०. | अप पुनर्मृत्युं जयति | तै.ब्रा. ३–११ | ६०. | इह चेदवेदीत | केन २. ख. |
| १८. | मां मा बाधस्व | भावप्र १-२-१२सू. | ६४. | तद्योऽसौ सोहम् | ऐ.आ.२-२-४-६ |
| २३. | सांपराये | ब्र. सू. ३-३-२७ | ,, | लक्ष्यरूपे. | ब्रह्मसिद्धिः |

## कठोपनिषदर्थसंग्रहः

नचिकेता यमात् प्राप्य सौमनस्यं पितुर्वरम् । स्वर्ग्याग्निज्ञानमप्येवं वव्रे मुक्तात्मवेदनम् ॥
स तं प्रशस्य प्रोवाच शब्दैकज्ञेयमात्मगम् । तारार्थं दान्तभक्तैकलभ्यं सूक्ष्मतमं विभुम् ॥
इन्द्रियार्थमनोबुद्धिजीवदेहान् हयादिवत् । स्थितान् देवश्च वशयन् पदं विष्णोर्भजेदिति ॥
अङ्गुष्ठमात्रमात्मानं चिदचित्सर्वशक्तिदम् । तमिहामुत्र चाप्येकं ध्यात्वा तादृग्भवेदिति ॥
पुरमेकादशद्वारमनुवृत्तोऽखिलान्तरम । स्रष्टारं स्वाप्नलोकस्याप्यग्र्यं ज्योतिर्भजेदिति ॥
अद्भुताश्वत्थकर्तारमभयाय चरन् पथि । इहैवाक्षजयी पश्यन् मुच्येनोत्क्रम्य सात्त्विति ॥
इत्थं कृष्णयजुर्वेदकठोपनिषदि स्थिताः । षड् वल्ल्यो व्यक्तमेवाहुः श्रीविष्णुं पुरुषं परम् ॥

## शोधनम्

| | | |
|---|---|---|
| ९ - ५. त्विभिरत्य | २६-१७. प्रश्नस्यो | ५५-२०. सकल्प्य |
| १०-२२. अयं वावे | २८-२०. सामाना | ५६-२७. शार्दूल |
| १३-१२. संदिग्धेषु | ३८-२८. त्यतुक्ता | ६२ - ५. हृदा |
| १६-२९. तत्रैव स्थितम् | ५२-२७. मित्युक्तत्वात् | ६५-१८. नोपप |
| २४-२२. आत्मन्यव | | |

## प्रमाण-अकारादि

श्रीः

# उभयवेदान्तग्रन्थमाला

ப்ராசீந ப்ரஸித்த பாஷ்யக்ரந்தங்களுடன் உபநிஷத்துக்களும், உரையுடன் திவ்யப்ரபந்தங்களும் இப்போது வெளியாகின்றன.

ராஜபோஷகபதவிக்கு ரூ. 100/- போஷகபதவிக்கு ரூ. 50/.

ரூ. 10/- முன் பணமாகச் செலுத்திச் சந்தாதாரானவர்கட்கும் தபால் செலவு வசூலிக்காமல் காபிகள் அனுப்பிக்கப்படும். இவ்விதம் சேர்வியலாதவர்கள் ஸம்ஸ்க்ருதத்திலும் தமிழிலும் அச்சிட்டவரையிலாவது க்ரந்தங்களை விலைக்கு வாங்கி இதற்கு உதவுவது நலம். ஒவ்வொரு ஸம்புடமும் 100 பக்கத்திற்குக் குறையாமலிருக்கும்.

ஒரு ஸம்புடம் அச்சிடப் பூரணமாகப் பணம் உதவுவோருக்கு அந்த ஸம்புடம் 500 ப்ரதிகள் விற்று வசூலாகும் பணத்தில் கால்பாகம் திரும்பக் கொடுக்கப்படும். அல்லது 125 ப்ரதிகளை மட்டும் பெறலாம். ஏதேனுமொரு விதமாக உதவி ஸம்ப்ரதாயத்தைக் காப்பதில் ஊக்கம் வைக்கப் பிரார்த்திக்கிறோம்.

...வே ஸ்ரீ பாஷ்யத்தையும் உரையுடன் சோதித்த ரீதியில் செவ்வனே அச்சிட்டு வெளியிடத் தகுந்த ஏற்பாடுகள் நடந்து வருகின்றன.

உபயவேதாந்தக்ரந்தமாலைக்குச் சந்தாதாரர்கள் அநேகர்...

போஷக, ராஜ போஷக பதவிகளிற் சேர்ந்த...
விலாச விவரத்தை மேற்புறத்திற் காண்க

[illegible]

## RAJAPOSHAKAS AND POSHAKAS.

---

1. Sri Rangaramanuja Chakravarti, Rs. 1,000 அளித்தவர்.
*Kutandakuppam, Kutandapatti Post, Jolarpet.*

2. Rao Bahadur, Sri V. T. Rangaswami Aiyengar,
*Balajinagar, Royapetta, High Road, Madras.*

3. Sri Pulippakkam Seshadri Aiyengar,
*Pulippakkam,* Chengelput.

4. Sri L. V. Gopalan, B. A., B. L.,
*Daivasikhamani Mudaliar Road, Lakshmipuram,*
*Royapetta P.O. Madras.*

5. Sri T. Srinivasaraghavachariar,
*Advocate, Main Road, Puduppalayam, Cudalore, N. T.*

6. Sri L. C. Sundaravaradachariar, B. A., B. L.,
*Advocate, Chittoor.*

7. Sri Doraiswami Aiyengar,
*Retired Tasildar, Kanakavallipuram, Tiruvallur.*

8. Matatraya Pandita, Sri A. V. Gopalacharya, B. A., B. L.,
*Advocate, Contonement, Trichinopoly.*

9. Rao Bahadur, Sri G. Rangaswami Aiyangar,
*Veda Vilas, Hindi Prachara Sabha Road,*
*Thyagarayanagar, Madras.*

10. Sri M. Anantasayanam Aiyangar, B.A. B.L.
*(Deputy Speaker, Legislative Assembly, Delhi,)* Chittoor.

11. Sri Ozhaiyur Sundarachariar,
*North Mada Street, L. Conjeevaram.*

इति

को. शठकोपाचार्यः [illegible]